# अनुक्रमणिका

# कथामुखम्

तथा च कथयाम्येतां तदीयां ते कथां श्रृणु।
प्रतिष्ठानाभिधानोऽस्ति देशो गोदावरीतटे॥ ०.१ ॥
तत्र विक्रमसेनस्य पुत्रः शक्रपराक्रमः।
प्राक्रिविक्रमसेनाख्यः ख्यातकीर्तिरभून्नृपः॥ ०.२ ॥
तस्य प्रत्यहमास्थानगतस्योपेत्य भूपतेः।
सेवार्थं क्षान्तिशीलाख्यो भिक्षुः फलमुपानयत्॥ ०.३ ॥
सोऽपि राजा तदादाय फलमासन्नवर्तिनः।
हस्ते ददौ प्रतिदिनं कोषागाराधिकारिणः॥ ०.४ ॥
इत्थं गतेषु वर्षेषु दशस्वत्र किलैकदा।
दत्त्वा राज्ञे फलं तस्मै भिक्षावास्थानतो गते॥ ०.५॥
स राजा तत्फलं प्रादात्प्रविष्टायात्र दैवतः।
क्रीडामर्कटपोताय हस्तभ्रष्टाय रक्षिणाम्॥ ०.६ ॥
स मर्कटस्तदश्नाति यावत्तावत्फलात्ततः।
विभिन्नमध्यान्निरगादनर्घं रत्नमुत्तमम्॥ ०.७॥
तद्दृष्ट्वादाय पप्रच्छ तं भाण्डागारिकं नृपः।
भिक्षूपनीतानि मया यानि नित्यं फलानि ते॥ ०.८॥
हस्ते दत्तानि तानि क्व स्थापितानि सदा त्वया।
तच्छ्रुत्वा तं स सभयः कोषाध्यक्षो व्यजिज्ञपत्॥ ०.९॥
क्षिप्तानि तान्यनुद्घाट्य मया गञ्जे गवाक्षतः।
यद्यादिशसि तद्देव तमुद्घाट्य गवेषये॥ ०.१०॥
इत्यूचिवाननुमतो राज्ञा गत्वा क्षणेन सः।
कोषाध्यक्षः समागत्य प्रभुं व्यज्ञापयत्पुनः॥ ०.११ ॥
शीर्णानि नात्र पश्यामि कोषे तानि फलान्यहम्।
रत्नराशिं तु पश्यामि रश्मिज्वालाकुलं विभो॥ ०.१२ ॥

तच्छ्रुत्वा तान्मणीन्दत्त्वा तुष्टोऽस्मै कोषरक्षिणे।
राजान्येद्युरपृच्छत्स भिक्षुं तं प्राग्वदागतम्॥०.१३॥
भिक्षो धनव्ययेनैवं सेवसे मां किमन्वहम्।
नेदानीं ते ग्रहीष्यामि फलं यावन्न वक्ष्यसि॥०.१४॥
इत्युक्तवन्तं राजानं भिक्षुस्तं विजनेऽब्रवीत्।
वीरसाचिव्यसापेक्षं मन्त्रसाधनमस्ति मे॥०.१५॥
तत्र वीरेन्द्र साहाय्यं क्रियमानं त्वयार्थये।
तच्छ्रुत्वा प्रतिपेदे तत्तथेत्यस्य स भूपतिः॥०.१६॥
ततः स श्रमणस्तुष्टो नृपं पुन उवाच तम्।
तर्हि कृष्णचतुर्दश्यामागामिन्यां निशागमे॥०.१७॥
इतो महाश्मशानान्तर्वटस्याधः स्थितस्य मे।
आगन्तव्यं त्वया देव प्रतिपालयतोऽन्तिकम्॥०.१८॥
बाढमेवं करिष्यामीत्युक्ते तेन महीभुजा।
स क्षान्तिशीलः श्रमणो हृष्टः स्वनिलयं ययौ॥०.१९॥
अथ तां स महासत्त्वः प्राप्य कृष्णचतुर्दशीम्।
प्रार्थनां प्रतिपन्नां तां भिक्षोस्तस्य नृपः स्मरन्॥०.२०॥
प्रदोषे नीलवसनस्तमालकृतशेखरः।
निर्ययौ राजधानीतः खड्गपाणिरलक्षितः॥०.२१॥
ययौ च घोरनिबिडध्वान्तव्रातमलीमसम्।
चितानलोग्रनयनज्वालादारुणदर्शनम्॥०.२२॥
असंख्यनरकङ्कालकपालास्थिविशङ्कटम्।
हृष्यत्संनिहितोत्तालभूतवेतालवेष्टितम्॥०.२३॥
भैरवस्यापरं रूपमिव गम्भीरभीषणम्।
स्फूर्जन्महाशिवारावं श्मशानं तदविह्वलः॥०.२४॥
विचित्य चात्र तं प्राप्य भिक्षुं वटतरोरधः।
कुर्वाणं मण्डलन्यासमुपसृत्य जगाद सः॥०.२५॥
एषोऽहमागतो भिक्षो ब्रूहि किं करवाणि ते।
तच्छ्रुत्वा स नृपं दृष्ट्वा हृष्टो भिक्षुरुवाच तम्॥०.२६॥
राजन्कृतः प्रसादश्चेत्तदितो दक्षिणामुखम्।
गत्वा विदूरमेकाकी विद्यते शिंशपातरुः॥०.२७॥

तस्मिन्नुल्लम्बितमृतः कोऽप्येकः पुरुषः स्थितः।
तमिहानय गत्वा त्वं सानाथ्यं कुरु वीर मे॥०.२८॥
तच्छ्रुत्वैव तथेत्युक्त्वा स राजा सत्यसंगरः।
दक्षिणां दिशमालम्ब्य प्रवीरः प्रययौ ततः॥०.२९॥
आत्तदीप्तचितालातलक्षितेन पथात्र सः।
गत्वा तमसि तं प्राप कथंचिच्छिंशपातरुम्॥०.३०॥
तस्य स्कन्धे चिताधूमदग्धस्य क्रव्यगन्धिनः।
सोऽपश्यल्लम्बमानं तं भूतस्येव शवं तरोः॥०.३१॥
आरुह्य चात्र भूमौ तं च्छिन्नरज्जुमापातयत्।
पतितश्चात्र सोऽकस्माच्चक्रन्द व्यथितो यथा॥०.३२॥
ततोऽवरुह्य कृपया जीवाशङ्की स तस्य यत्।
राजाङ्गं प्रामृशत्तेन सोऽट्टहासं व्यधाच्छवः॥०.३३॥
ततः स राजा मत्वा तं वेतालाधिष्ठितं तदा।
किं हसस्येहि गच्छाव इति यावदकम्पितः॥०.३४॥
वक्ति तावन्न भूमौ सवेतालं शवमैक्षत।
ऐक्षतात्रैव वृक्षे तु लम्बमानं स्थितं पुनः॥०.३५॥
ततोऽधिरुह्य भूयोऽपि तमवातारयत्ततः।
वज्रादपि हि वीराणां चित्तरत्नमखण्डितम्॥०.३६॥
आरोप्य च सवेतालं स्कन्धे मौनेन तं शवम्।
स त्रिविक्रमसेनोऽथ राजा गन्तुं प्रचक्रमे॥०.३७॥
यान्तं च तं शवान्तःस्थो वेतालोऽंसस्थितोऽब्रवीत्।
राजन्नध्वविनोदाय कथामाख्यामि ते शृणु॥०.३८॥

# प्रथमो वेतालः

अस्ति वाराणसी नाम पुरारिवसतिः पुरी।
स्थलीव कैलासगिरेर्या पुण्यजनसेविता॥ १.१॥
भूरिवारिभृता शश्वदुपकण्ठनिवेशिनी।
हारयष्टिरिवाभाति यस्याः स्वर्गतरङ्गिणी॥ १.२॥
प्रतापानलनिर्दग्धविपक्षकुलकाननः।
तस्यां प्रतापमुकुटो नाम राजाभवत्पुरा॥ १.३॥
तस्याभूद्वज्रमुकुटस्तनयो रूपशौर्ययोः।
कुर्वाणो दर्पदलनं स्मरस्यारिजनस्य च॥ १.४॥
राजपुत्रस्य तस्यात्र मन्त्रिपुत्रो महामतिः।
आसीद्बुद्धिशरीराख्यः शरीराभ्यधिकः सखा॥ १.५॥
तेन सख्या सह क्रीडन्स कदाचिन्नृपात्मजः।
जगाम दूरमध्वानं मृगयाति प्रसङ्गतः॥ १.६॥
शौर्यश्रीचामराणीव सिंहानां मस्तकानि सः।
छिन्दञ्शरैः सटालानि विवेशैकं महावनम्॥ १.७॥
तत्रास्थाने स्मरस्येव पठत्कोकिलबन्दिनि।
दत्तोपकारे तरुभिर्मञ्जरीचलचामरैः॥ १.८॥
सोऽन्वितो मन्त्रिपुत्रेण तेनापश्यत्सरोवरम्।
विचित्रकमलोत्पत्तिधामाम्बुधिमिवापरम्॥ १.९॥
तस्मिंस्तदैव सरसि स्नानार्थं काचिदागता।
तेन दिव्याकृतिः कन्या ददृशे सपरिच्छदा॥ १.१०॥
पूरयन्तीव लावण्यनिर्झरेण सरोवरम्।
दृष्टिपातैः सृजन्तीव तत्रोत्पलवनं नवम्॥ १.११॥
प्रत्यादिशन्तीव मुखेनाम्बुजानि जितेन्दुना।
सा जहार मनस्तस्य राजपुत्रस्य तत्क्षणम्॥ १.१२॥

सोऽप्यहार्षीत्तथा तस्या युवा दृष्ट्वा विलोचने।
यथा नैक्षत सा कन्या लज्जां स्वामप्यलंकृतिम्॥ १.१३॥
यूनि पश्यति तस्मिन्सा केयं स्यादिति सानुगे।
संज्ञां स्वदेशाद्याख्यातुं विलासच्छद्मनाकरोत्॥ १.१४॥
करोति स्मोत्पलं कर्णे गृहीत्वा पुष्पशेखरात्।
चिरं च दन्तरचनां चकारादाय च व्यधात्॥ १.१५॥
पद्मं शिरसि साकूतं हृदये चादधे करम्।
राजपुत्रश्च तस्यास्तां संज्ञां न ज्ञातवांस्तदा॥ १.१६॥
मन्त्रिपुत्रस्तु बुबुधे स सखा तस्य बुद्धिमान्।
क्षणाच्च सा ययौ कन्या नीयमानानुगैस्ततः॥ १.१७॥
प्राप्य च स्वगृहं तस्थौ पर्यङ्केऽङ्गं निधाय सा।
चित्तं तु निजसंज्ञार्थमास्थात्तस्मिन्नृपात्मजे॥ १.१८॥
सोऽपि राजसुतो भ्रष्टविद्यो विद्याधरो यथा।
गत्वा स्वनगरीं कृच्छ्रां प्रापावस्थां तया विना॥ १.१९॥
सख्या च मन्त्रिपुत्रेण तेन पृष्टस्तदा रहः।
शंसता तामदुष्प्रापां त्यक्तधैर्यो जगाद सः॥ १.२०॥
यस्या न नाम न ग्रामो नान्वयो वावबुध्यते।
सा कथं प्राप्यते तन्मामाश्वासयसि किं मृषा॥ १.२१॥
इत्युक्तो राजपुत्रेण मन्त्रिपुत्रस्तमभ्यधात्।
किं न दृष्टं त्वया तद्यत्संज्ञया सूचितं तया॥ १.२२॥
न्यस्तं यदुत्पलं कर्णे तेनैतत्ते तयोदितम्।
कर्णोत्पलस्य राष्ट्रेऽहं निवसामि महीभृतः॥ १.२३॥
कृता यद्दन्तरचना तेनैतत्कथितं तया।
तत्र जानीहि मां दन्तघाटकस्य सुतामिति॥ १.२४॥
पद्मावतीति नामोक्तं तयोत्तंसितपद्मया।
त्वयि प्राणा इति प्रोक्तं हृदयार्पितहस्तया॥ १.२५॥
कलिङ्गदेशे ह्यस्त्यत्र ख्यातः कर्णोत्पलो नृपः।
तस्य प्रसादवित्तोऽस्ति महान्यो दन्तघाटकः॥ १.२६॥
सङ्ग्रामवर्धनाख्यस्य तस्याप्यस्ति जगत्त्रये।
रत्नं पद्मावती नाम कन्या प्राणाधिकप्रिया॥ १.२७॥

एतच्च लोकतो देव यथावद्विदितं मम।
अतो ज्ञाता मया संज्ञा तस्या देशादिशंसिनी॥ १.२८॥
इत्युक्तो मन्त्रिपुत्रेन तेन राजसुतोऽथ सः।
तुतोष तस्मै सुधिये लब्धोपायो जहर्ष च॥ १.२९॥
संमन्त्र्य च समं तेन स तद्युक्तः स्वमन्दिरात्।
प्रियार्थी मृगयाव्याजात्पुनस्तामगमद्दिशम्॥ १.३०॥
अर्धमार्गे च वाताश्ववेगवञ्चितसैनिकः।
तं मन्त्रिपुत्रैकयुतः कलिङ्गविषयं ययौ॥ १.३१॥
तत्र तौ प्राप्य नगरं कर्णोत्पलमहीभृतः।
अन्विष्य दृष्ट्वा भवनं दन्तघाटस्य तस्य च॥ १.३२॥
तददूरे च वासार्थमेकस्या वृद्धयोषितः।
गृहं प्राविशतां मन्त्रिपुत्रराजसुतावुभौ॥ १.३३॥
दत्ताम्बुयवसौ वाहौ गुप्तेऽवस्थाप्य चात्र सः।
राजपुत्रे स्थिते वृद्धां मन्त्रिपुत्रो जगाद ताम्॥ १.३४॥
कश्चिद्वेत्स्यम्ब सङ्ग्रामवर्धनं दन्तघाटकम्।
तच्छ्रुत्वा सा जरद्योषित्सश्रद्धा तमभाषत॥ १.३५॥
वेद्म्येव धात्री तस्यास्मि स्थापिता तेन चाधुना।
पद्मावत्याः स्वदुहितुः पार्श्वे ज्येष्ठतरेत्यहम्॥ १.३६॥
किं त्वहं न सदा तत्र गच्छाम्युपहताम्बरा।
कुपुत्रः कितवो वस्त्रं दृष्ट्वा हि हरते मम॥ १.३७॥
एवमुक्तवतीं प्रीतः स्वोत्तरीयादिदानतः।
संतोष्य सोऽत्र वृद्धां तां मन्त्रिपुत्रोऽब्रवीत्पुनः॥ १.३८॥
माता त्वं तद्वदामस्ते गुप्तं यत्तत्कुरुष्व नः।
दन्तघाटसुतामेतां गत्वा पद्मावतीं वद॥ १.३९॥
सोऽत्रागतो राजपुत्रो दृष्टो यः सरसि त्वया।
तेन चेह तदाख्यातुं प्रेषिता प्रणयादहम्॥ १.४०॥
तच्छ्रुत्वा सा तथेत्युक्त्वा वृद्धा दानवशीकृता।
गत्वा पद्मावतीपार्श्वमाजगाम क्षणान्तरे॥ १.४१॥
पृष्टा जगाद तौ राजसुतमन्त्रिसुतौ च सा।
युष्मदागमनं गत्वा गुप्तं तस्या मयोदितम्॥ १.४२॥

तया श्रुत्वा च निर्भर्त्स्य पाणिभ्यामहमाहता।
द्वाभ्यां कर्पूरलिप्ताभ्यामुभयोर्गण्डयोर्मुखे॥ १.४३॥
ततः परिभवोद्विग्ना रुदत्यहमिहागता।
एतास्तदङ्गुलीमुद्राः पुत्रौ मे पश्यतं मुखे॥ १.४४॥
एवं तयोक्ते नैराश्यविषण्णं तं नृपात्मजम्।
जगाद स महाप्राज्ञो मन्त्रिपुत्रो जनान्तिकम्॥ १.४५॥
मा गा विषादं रक्षन्त्या मन्त्रं निर्भर्त्स्य यत्तया।
कर्पूरशुभ्रा वक्रेऽस्याः स्वाङ्गुल्यो दश पातिताः॥ १.४६॥
तदेतदुक्तं पक्षेऽस्मिञ्शुक्ले चन्द्रवतीरिमाः।
रात्रीर्दश प्रतीक्षध्वं संगमानुचिता इति॥ १.४७॥
इत्याश्वास्य स तं राजसुतं मन्त्रिसुतस्ततः।
विक्रीय गुप्तं हस्तस्थं काञ्चनं किंचिदापणे॥ १.४८॥
वृद्धया साधयामास महार्हं भोजनं तया।
ततस्तौ बुभुजाते द्वौ तत्तया सह वृद्धया॥ १.४९॥
एवं नीत्वा दशाहानि जिज्ञासार्थं पुनः स ताम्।
पद्मावत्यन्तिकं वृद्धां मन्त्रिपुत्रो विसृष्टवान्॥ १.५०॥
सापि मृष्टान्नपानादिलुब्धा तदनुरोधतः।
गत्वा वासगृहं तस्या भूयोऽभ्येत्य जगाद तौ॥ १.५१॥
इतो गत्वाद्य तूष्णीमप्यहं तत्र स्थिता तया।
युष्मत्कथापराधं तमुद्गिरन्त्या स्वयं पुनः॥ १.५२॥
सा लक्तकाभिस्तिसृभिः कराङ्गुलिभिराहता।
उरस्यस्मिन्नथैषाहमिहायाता तदन्तिकात्॥ १.५३॥
तच्छ्रुत्वा राजपुत्रं तं स्वैरं मन्त्रिसुतोऽब्रवीत्।
मा कार्षीरन्यथा शङ्कामस्या हि हृदये तया॥ १.५४॥
सा लक्तकाङ्गुलीमुद्रात्रयं विन्यस्य युक्तितः।
रजस्वला निशास्तिस्रः स्थिताहमिति सूचितम्॥ १.५५॥
एवमुक्त्वा नृपसुतं मन्त्रिपुत्रस्त्र्यहे गते।
पद्मावत्यै पुनस्तस्यै वृद्धां तां प्रजिघाय सः॥ १.५६॥
सा गता मन्दिरं तस्यास्तया संमान्य भोजिता।
प्रीत्या पानादिलीलाभिर्दिनं चात्र विनोदिता॥ १.५७॥

सायं च यावत्सा वृद्धा गृहमागन्तुमिच्छति।
उदभूद्भयकृत्तावत्तत्र कोलाहलो बहिः॥ १.५८॥
हा हा भ्रष्टोऽयमालानाज्जनान्मथ्नन्प्रधावति।
मत्तहस्तीति लोकस्य तत्राक्रन्दोऽथ शुश्रुवे॥ १.५९॥
ततः पद्मावती सा तां वृद्धामेवमभाषत।
स्पष्टेन हस्तिरुद्धेन गन्तुं युक्तं न ते पथा॥ १.६०॥
तत्पीठिकां समारोप्य बद्धालम्बनरज्जुकाम्।
बृहद्गवाक्षेणानेन त्वामत्र प्रक्षिपामहे॥ १.६१॥
गृहोद्याने ततो वृक्षमारुह्यामुं विलङ्घ्य च।
प्राकारमवरुह्यान्यवृक्षेण स्वगृहं व्रज॥ १.६२॥
इत्युक्त्वा सा गवाक्षेण क्षेपयामास तत्र ताम्।
वृद्धां चेटीभिरुद्याने रज्जुपीठिकया ततः॥ १.६३॥
साथ गत्वा यथोक्तेन पथा सर्वं शशंस तत्।
यथावद्राजपुत्राय तस्मै मन्त्रिसुताय च॥ १.६४॥
ततः स मन्त्रिपुत्रस्तं राजपुत्रमभाषत।
सिद्धं तवेष्टं मार्गो हि युक्त्या ते दर्शितस्तया॥ १.६५॥
तद्गच्छाद्यैव तत्र त्वं प्रदोषेऽस्मिन्नुपागते।
एतेनैव पथा तस्याः प्रियाया मन्दिरं विश॥ १.६६॥
इत्युक्तस्तेन तद्युक्तो राजपुत्रो ययौ स तत्।
उद्यानं वृद्धयोक्तेन तेन प्राकारवर्त्मना॥ १.६७॥
तत्रापश्यच्च रज्जुं तां लम्बमानां सपीठिकाम्।
मार्गोन्मुखाभिश्चेटीभिरुपरिष्टादधिष्ठिताम्॥ १.६८॥
आरूढस्तां च दृष्ट्वैव दासीभिस्ताभिराशु सः।
रज्जूत्क्षिप्तो गवाक्षेण प्रविवेश प्रियान्तिकम्॥ १.६९॥
तस्मिन्प्रविष्टे स ययौ मन्त्रिपुत्रः स्वमास्पदम्।
राजपुत्रस्तु तां पद्मावतीं तत्र ददर्श सः॥ १.७०॥
पूर्णामृतांशुवदनां प्रसरत्कान्तिचन्द्रकाम्।
कृष्णपक्षभयाद्गुप्तस्थितां राकानिशामिव॥ १.७१॥
सापि दृष्ट्वा तमुत्थाय चिरौत्सुक्योचितैस्ततः।
कण्ठग्रहादिभिस्तैस्तैरुपचारैरमानयत्॥ १.७२॥

ततस्तया स गान्धर्वविधिनोदूढया सह।
गुप्तं राजसुतस्तस्थौ पूर्णेच्छस्तत्र कान्तया॥ १.७३॥
स्थित्वा चाहानि कतिचिद्रात्रौ तामवदत्प्रियाम्।
सखा मम सहायातो मन्त्रिपुत्र इति स्थितः॥ १.७४॥
स चात्र तिष्ठत्येकाकी त्वज्ज्येष्ठतरिकागृहे।
गत्वा संभाव्य तं तन्वि पुन एष्यामि तेऽन्तिकम्॥ १.७५॥
तच्छ्रुत्वा तमवोचत्सा धूर्ता पद्मावती प्रियम्।
हन्तार्यपुत्र पृच्छामि ताः संज्ञा मत्कृतास्त्वया॥ १.७६॥
ज्ञाता किं किमुवा तेन सख्या मन्त्रिसुतेन ते।
एवमुक्तवतीमेतां राजपुत्रो जगाद सः॥ १.७७॥
न ज्ञातं तन्मया किंचिज्ज्ञात्वा सर्वं च तेन मे।
आख्यातं मन्त्रिपुत्रेण दिव्यप्रज्ञानशालिना॥ १.७८॥
एतच्छ्रुत्वा विचिन्त्यैव भामिनी सा जगाद तम्।
तर्ह्ययुक्तं कृतं यन्मे चिरात्स कथितस्त्वया॥ १.७९॥
स मे भ्राता सखा यस्ते तस्य च प्रथमं मया।
ताम्बूलादिसमाचारः कर्तव्यो हि सदा भवेत्॥ १.८०॥
इत्युक्तवत्यानुमतस्तया पूर्वपथेन सः।
राजपुत्रोऽन्तिकं तस्य सख्युरागात्ततो निशि॥ १.८१॥
शशंस च कथामध्ये तत्तस्मै यत्तदाश्रयम्।
संज्ञाविज्ञानकथनं कृतं तेन प्रियान्तिके॥ १.८२॥
मन्त्रिपुत्रस्तु सोऽयुक्तमिति न श्रद्दधेऽस्य तत्।
तावच्च सा तयोस्तत्र विभाताभूद्विभावरी॥ १.८३॥
अथैतयोर्विधौ सांध्ये निवृत्ते कुर्वतोः कथाः।
आगात्पक्वान्नताम्बूलहस्ता पद्मावतीसखी॥ १.८४॥
सा मन्त्रिपुत्रं कुशलं पृष्ट्वा दत्तोपचारिका।
निषेद्धुं राजपुत्रस्य भोजनं तत्र युक्तितः॥ १.८५॥
कथान्तरे स्वामिनीं स्वां भोजनादौ तदागमम्।
प्रतीक्षमाणामावेद्य क्षणाद्द्रुतं ततो ययौ॥ १.८६॥
ततस्तं मन्त्रिपुत्रः स राजपुत्रमभाषत।
कौतुकं पश्य देवैकं दर्शयाम्यधुना तव॥ १.८७॥

इत्युक्त्वा भक्ष्यमेकं स पक्वान्नं दत्तवांस्ततः।
सारमेयाय स च तत्खादित्वैव व्यपद्यत॥ १.८८॥
तद्दृष्ट्वा किमिदं चित्रमिति राजसुतोऽत्र सः।
पप्रच्छ मन्त्रिपुत्रं तं स चैतं प्रत्यभाषत॥ १.८९॥
संज्ञाज्ञानेन धूर्तं मां विदित्वा हन्तुकामया।
तया विषान्नं प्रहितं मम त्वदनुरक्तया॥ १.९०॥
नास्मिन्सति मदेकाग्रो राजपुत्रो भवेदयम्।
एतद्वशश्च मुक्त्वा मां नगरीं स्वां व्रजेदिति॥ १.९१॥
तन्मुञ्च मन्युमेतस्यां बन्धुत्यागान्महात्मनः।
कुर्यास्त्वं हरणे युक्तिं वक्ष्याम्यालोच्य यामहम्॥ १.९२॥
इत्युक्तवन्तं तं मन्त्रिसुतं राजसुतोऽत्र सः।
सत्यं बुद्धिशरीरस्त्वमिति यावत्प्रशंसति॥ १.९३॥
अशङ्कितं बहिस्तावद्दुःखाकुलजनारवः।
हा धिग्राज्ञः सुतो बालो विपन्न इति शुश्रुवे॥ १.९४॥
तदाकर्णनहृष्टोऽथ मन्त्रिपुत्रो नृपात्मजम्।
जगाद हन्त गच्छाद्य पद्मावत्या गृहं निशि॥ १.९५॥
तत्र तां पाययेस्तावद्यावत्पानमदेन सा।
निःसंज्ञा नष्टचेष्टा च गतजीवेव जायते॥ १.९६॥
ततस्तस्याः सनिद्रायाः शूलेनाङ्कं कटीतटे।
दत्त्वाग्नितप्तेनादाय तदाभरणसंचयम्॥ १.९७॥
आगच्छेस्त्वं गवाक्षेण रज्जुलम्बविनिर्गतः।
ततः परं यथा भद्रं भवेज्ज्ञास्याम्यहं तथा॥ १.९८॥
इत्युक्त्वा कारयित्वा च क्रोडवालनिभाश्रिकम्।
मन्त्रिपुत्रो ददौ तस्मै त्रिशूलं राजसूनवे॥ १.९९॥
राजपुत्रः स हस्ते तत्कृत्वा कुटिलकर्कशम्।
कालायस दृढं चित्तमिव कान्तावयस्ययोः॥ १.१००॥
तथेति पूर्ववद्रात्रावगात्पद्मावतीगृहम्।
अविचार्यं प्रभूणां हि शुचेर्वाक्यं स्वमन्त्रिणः॥ १.१०१॥
तत्र तां मद्यनिश्चेष्टां शूलेन जघनेऽङ्किताम्।
हृतालंकरणां कृत्वा तस्यागात्सख्युरन्तिकम्॥ १.१०२॥

दर्शिताभरणस्तस्मै शशंस च यथाकृतम्।
ततः स मन्त्रिपुत्रोऽपि सिद्धं मेने मनीषितम्॥ १.१०३॥
प्रातर्गत्वा श्मशानं च सोऽभूत्तापसवेषभृत्।
स्वैरं राजसुतं तं च विदधे शिष्यरूपिणम्॥ १.१०४॥
अब्रवीत्तं च गच्छैकमितोऽलंकरणादिमाम्।
मुक्तावलीं समादाय त्वं विक्रेतुमिवापणे॥ १.१०५॥
बहुमूल्यं वदेश्चास्या येनैतां नैव कश्चने।
गृह्णीयाद्भ्राम्यमाणां च सर्वः कोऽपि विलोकयेत्॥ १.१०६॥
गुरुणा मम विक्रेतुमियं दत्तेत्यनाकुलः।
ब्रूयाश्च यदि गृह्णीयुरत्र त्वां पुररक्षिणः॥ १.१०७॥
इति स प्रेषितस्तेन गत्वा राजसुतस्तदा।
अतिष्ठदापणे भ्राम्यन्व्यक्तं मुक्तावलीं दधत्॥ १.१०८॥
तथाभूतश्च जगृहे स दृष्ट्वा पुररक्षिभिः।
दन्तघाटसुतामोषज्ञप्तेश्चौरेगवेषिभिः॥ १.१०९॥
निन्ये च नगराध्यक्षनिकटं तैः स तत्क्षणात्।
स च तं तापसाकारं दृष्ट्वा पप्रच्छ सान्त्वतः॥ १.११०॥
कुतो मुक्तावलीयं ते भगवन्निह हारिता।
दन्तघाटककन्याया हृतं ह्याभरणं निशि॥ १.१११॥
तच्छ्रुत्वा राजपुत्रस्तं सोऽवादीत्तापसाकृतिः।
गुरुणा मम दत्तेयमेत्यासौ पृच्छ्यतामिति॥ १.११२॥
ततश्चोपेत्य तं नत्वा पप्रच्छ नगराधिपः।
मुक्तावलीयं भगवन्कुतस्ते शिष्यहस्तगा॥ १.११३॥
श्रुत्वैतद्विजनं कृत्वा स धूर्तस्तमभाषत।
अहं तपस्वी भ्राम्यामि सदारण्येष्वितस्ततः॥ १.११४॥
सोऽहं दैवादिह प्राप्तः श्मशानेऽत्र स्थितो निशि।
अपश्यं योगिनीचक्रं समागतमितस्ततः॥ १.११५॥
तन्मध्ये चैकयानीय योगिन्या राजपुत्रकः।
उद्घाटितहृदम्भोजो भैरवाय निवेदितः॥ १.११६॥
पानमत्ता च सा हर्तुं जपतो मेऽक्षमालिकाम्।
प्रावर्तत महामाया विकारान्कुर्वती मुखे॥ १.११७॥

अतिप्रवृत्ता च मया क्रुद्धेन जघनस्थले।
अङ्किता सा त्रिशूलेन मन्त्रप्रज्वालिताश्रिणा॥ १.११८॥
हृता मुक्तावली चेयं तस्याः कण्ठान्मया तदा।
सैषाद्य तापसानर्हा विक्रेया मम वर्तते॥ १.११९॥
एतच्छ्रुत्वा पुराध्यक्षो गत्वा भूपं व्यजिज्ञपत्।
भूपोऽप्याकर्ण्य तत्तां च बुद्ध्वा तन्मौक्तिकावलीम्॥ १.१२०॥
प्रेक्षणप्रेषितायातवृद्धाप्तवनितामुखात्।
श्रुत्वा च दृश्यशूलाङ्कां जघने सत्यमेव ताम्॥ १.१२१॥
ग्रस्तः सुतो मे डकिन्या तयेत्युत्पन्ननिश्चयः।
स्वयं तस्यान्तिकं गत्वा मन्त्रिपुत्रतपस्विनः॥ १.१२२॥
पृष्ट्वा च निग्रहं तस्याः पद्मावत्याः स तद्गिरा।
पितृभ्यां शोच्यमानायाः पुरान्निर्वासनं व्यधात्॥ १.१२३॥
निर्वासिताटवीस्था सा विग्नापि न जहौ तनुम्।
उपायं मन्त्रिपुत्रेण तं संभाव्य तथा कृतम्॥ १.१२४॥
दिनान्ते तां च शोचन्तीमश्वारूढावुपेयतुः।
त्यक्ततापसवेषौ तौ मन्त्रिपुत्रनृपात्मजौ॥ १.१२५॥
आश्वास्यारोप्य तुरगे स्वराष्ट्रं निन्यतुश्च ताम्।
तत्र तस्थौ तया साकं राजपुत्रः स निर्वृतः॥ १.१२६॥
दन्तघाटस्त्वरण्ये तां क्रव्यादैर्भक्षितां सुताम्।
मत्वा व्यपादि शोकेन भार्या चानुजगाम तम्॥ १.१२७॥
इत्याख्याय स भूयस्तं वेतालो नृपमब्रवीत्।
तन्मेऽत्र संशयं छिन्द्धि दंपत्योरेतयोर्वधात्॥ १.१२८॥
मन्त्रिपुत्रस्य किं पापं राजपुत्रस्य किं नु वा।
पद्मावत्याः किमथ वा त्वं हि बुद्धिमतां वरः॥ १.१२९॥
जानानश्च न चेद्राजन्मम तत्त्वं वदिष्यसि।
तदेष शतधा मूर्धा निश्चितं ते स्फुटिष्यति॥ १.१३०॥
इत्युक्तवन्तं वेतालं विजानञ्शापभीतितः।
स त्रिविक्रमसेनस्तमेवं प्रत्यब्रवीन्नृपः॥ १.१३१॥
योगेश्वर किमज्ञेयमेतन्नैषां हि पातकम्।
त्रयाणामपि राज्ञस्तु पापं कर्णोत्पलस्य तत्॥ १.१३२॥

वेतालोऽप्याह राज्ञः किं ते हि तत्कारिणस्त्रयः।
काकाः किमपराध्यन्ति हंसैर्जग्धेषु शालिषु॥ १.१३३॥
राजा ततोऽब्रवीच्चैनं न दुष्यन्ति त्रयोऽपि ते।
मन्त्रिसूनोर्हि तत्तावत्प्रभुकार्यमपातकम्॥ १.१३४॥
पद्मावतीराजपुत्रौ तौ हि कामशराग्निना।
संतप्तावविचारार्हावदोषौ स्वार्थमुद्यतौ॥ १.१३५॥
कर्णोत्पलस्तु राजा स नीतिशास्त्रेष्वशिक्षितः।
चरैः प्रजास्वनन्विष्यंस्तत्त्वशुद्धिं निजास्वपि॥ १.१३६॥
अजानन्धूर्तचरितानीङ्गिताद्यविचक्षणः।
तथा तन्निर्विचारं यच्चक्रे तेन स पापभाक्॥ १.१३७॥
इत्याकर्ण्य विमुक्तमौनमुदिते सम्यङ्नृपेणोत्तरे
स्कन्धात्तस्य स दार्ढ्यमाकलयितुं मायाबलात्तत्क्षणम्।
वेतालो नृकलेवरान्तरगतः क्वाप्यप्रतर्क्यो ययौ
निःकम्पः स च भूपतिः पुनरमुं प्राप्तुं व्यधान्निश्चयम्॥ १.१३८॥

# द्वितीयो वेतालः

ततोऽत्र पुन आनेतुं तं वेतालमगान्नृपः।
स त्रिविक्रमसेनस्तच्छिंशपापादपान्तिकम्॥ २.१ ॥
प्राप्तोऽत्र वीक्षते यावच्चितालोकवशान्निशि।
तावद्ददर्श तं भूमौ कूजन्तं पतितं शवम्॥ २.२ ॥
अथ तं मृतदेहस्थं वेतालं स महीपतिः।
आरोप्य स्कन्धमानेतुं तूष्णीं प्रववृते जवात्॥ २.३ ॥
ततः स्कन्धात्स वेतालो भूयस्तं नृपमब्रवीत्।
राजन्महत्यनुचिते क्लेशेऽस्मिन्पतितो भवान्॥ २.४ ॥
अतस्तव विनोदाय खतयामि खतां शृणु।
अस्त्यग्रहारः कालिन्दीकूले ब्रह्मस्थलाभिधः॥ २.५ ॥
अग्निस्वामीति तत्रासीद्ब्राह्मणो वेदपारगः।
तस्यातिरूपा मन्दारवतीत्यजनि कन्यका॥ २.६ ॥
यां निर्माय नवानर्घलावण्यां नियतं विधिः।
स्वर्गस्त्रीपूर्वनिर्माणं निजमेवाजुगुप्सत॥ २.७ ॥
तस्यां च यौवनस्थायामाययुः कान्यकुब्जतः।
समसर्वगुणास्तत्र त्रयो ब्राह्मणपुत्रकाः॥ २.८ ॥
तेषां चात्मार्थमेकैकस्तत्पितुस्तामयाचत।
अनिच्छन्दानमन्यस्मै तस्याः प्रानव्ययादपि॥ २.९ ॥
तत्पिता स तु तन्मध्यान्नैकस्मा अपि तां ददौ।
भीतोऽन्ययोर्वधात्तेन तस्थौ कन्यैव सा ततः॥ २.१० ॥
ते च त्रयोऽपि तद्वक्त्रचन्द्रैकासक्त दृष्टयः।
चकोरव्रतमालम्ब्य तत्रैवासन्दिवानिशम्॥ २.११ ॥
अथाकस्मात्समुत्पन्न दाहज्वरवशेन सा।
जगाम मन्दारवती कुमारी किल पञ्चताम्॥ २.१२ ॥

ततस्तां विप्रपुत्रास्ते परासुं शोकविक्लवाः।
कृतप्रसाधनां नीत्वा श्मशानं चक्रुरग्निसात्॥ २.१३॥
एकश्च तेषां तत्रैव विधाय मठिकां ततः।
कृततद्भस्मशय्यः सन्नास्तायाचितभैक्षभुक्॥ २.१४॥
द्वितीयोऽस्थीन्युपादाय तस्या भागीरथीं ययौ।
तृतीयस्तापसो भूत्वा भ्रान्तुं देशान्तराण्यगात्॥ २.१५॥
स भ्राम्यंस्तापसः प्राप ग्रामं वक्रोलकाभिधम्।
तत्रातिथिः सन्कस्यापि विप्रस्य प्राविशद्गृहम्॥ २.१६॥
तत्पूजितः स यावच्च भोक्तुं तत्र प्रचक्रमे।
तावदेकः शिशुस्तत्र प्रवृत्तोऽभूत्प्ररोदितुम्॥ २.१७॥
स सान्त्व्यमानोऽपि यदा न व्यरंसीत्तदा क्रुधा।
बाहावादाय गृहिणी ज्वलत्यग्नौ तमक्षिपत्॥ २.१८॥
क्षिप्त मात्रः स मृद्वङ्गो भस्मीभावमवाप्तवान्।
तद्दृष्ट्वा जातरोमाञ्चः सोऽब्रवीत्तापसोऽतिथिः॥ २.१९॥
हा धिक्कष्टं प्रविष्टोऽस्मि ब्रह्मराक्षसवेश्मनि।
तन्मूर्तं किल्बिषमिदं न भोक्ष्येऽन्नमिहाधुना॥ २.२०॥
एवं वदन्तं तं सोऽत्र गृहस्थः प्राह पश्य मे।
शक्तिं पठितसिद्धस्य मन्त्रस्य मृतजीवनीम्॥ २.२१॥
इत्युक्त्वादाय तन्मन्त्रपुस्तिकामनुवाच्य च।
तत्र भस्मनि चिक्षेप स धूलिमभिमन्त्रिताम्॥ २.२२॥
तेनोदतिष्ठत्तद्रूप एव जीवन्स बालकः।
ततः स निर्वृतस्तत्र भुक्तवान्विप्रतापसः॥ २.२३॥
गृहस्थोऽपि स तां नागदन्तेऽवस्थाप्य पुस्तिकाम्।
भुक्त्वा च शयनं भेजे रात्रौ तत्रैव तद्युतः॥ २.२४॥
सुप्ते गृहपतौ तस्मिन्स्वैरमुत्थाय शङ्कितः।
स प्रियाजीवितार्थी तां पुस्तिकां तापसोऽग्रहीत्॥ २.२५॥
गृहीत्वैव च निर्गत्य ततो रात्रिदिनं व्रजन्।
क्रमाच्छ्मशानं तत्प्राप यत्र दग्धास्य सा प्रिया॥ २.२६॥
ददर्श चात्र तत्कालं तं द्वितीयमुपागतम्।
यः स गङ्गाम्भसि क्षेप्तुं तदस्थीनि गतोऽभवत्॥ २.२७॥

ततस्तं च तमाद्यं च तस्या भस्मनि शायिनम्।
निबद्धमठिकं तत्र द्वावप्येतौ जगाद सः॥२.२८॥
मठिकापास्यतामेषा यावदुत्थापयामि ताम्।
जीवन्तीं भस्मतः कान्तां मन्त्रशक्त्या कयाप्यहम्॥२.२९॥
इति तौ प्रेर्य निर्बन्धान्निर्लोठ्य मठिकां च सः।
उद्घाट्य तापसो विप्रः पुस्तिकां तामवाचयत्॥२.३०॥
अभिमन्त्र्य च मन्त्रेण धूलिं भस्मन्यवाक्षिपत्।
उदतिष्ठच्च जीवन्ती सा मन्दारवती ततः॥२.३१॥
वह्निं प्रविश्य निष्क्रान्तं वपुः पूर्वाधिकद्युति।
तदा बभार सा कन्या काञ्चनेनेव निर्मितम्॥२.३२॥
तादृशीं तां पुनर्जातां ते दृष्ट्वैव स्मरातुराः।
प्राप्तुकामास्त्रयोऽप्येवमन्योन्यं कलहं व्यधुः॥२.३३॥
एकोऽब्रवीदियं भार्या मम मन्त्रबलार्जिता।
तीर्थप्रभावजा भार्या ममेयमिति चापरः॥२.३४॥
रक्षित्वा भस्म तपसा जीवितेयं मयेह यत्।
तदेषा मम भार्येति तृतीयोऽत्र जगाद सः॥२.३५॥
विवादनिर्णये तेषां त्वं तावन्मे महीपते।
निश्चयं ब्रूहि कस्यैषा कन्या भार्योपपद्यते॥२.३६॥
विदलिष्यति मूर्धा ते यदि जानन्न वक्ष्यसि।
इति वेतालतः श्रुत्वा तं स राजैवमभ्यधात्॥२.३७॥
यः क्लेशमनुभूयापि मन्त्रेणैतामजीवयत्।
पिता स तस्यास्तत्कार्यकरणान्न पुनः पतीः॥२.३८॥
यश्चास्तीनि निनायास्य गङ्गायां स सुतो मतः।
यस्तु तद्भस्मशय्यं तामाश्लिष्यासीत्तपश्चरन्॥२.३९॥
श्मशान एव तत्प्रीत्या भर्ता तस्याः स उच्यते।
कृतं तदनुरूपं हि तेन गाढानुरागिण॥२.४०॥
एवं नृपात्त्रिविक्रमसेनाच्छ्रुत्वैव मुक्तमौनात्सः।
तस्य स्कन्धादगमद्वेतालोऽतर्कितः स्वपदम्॥२.४१॥
राजाथ भिक्ष्वर्थसमुद्यतस्तं प्राप्तुं स भूयोऽपि मनो बबन्ध।
प्राणात्ययेऽपि प्रतिपन्नमर्थं तिष्ठन्त्यनिर्वाह्य न धीरसत्त्वाः॥२.४२॥

# तृतीयो वेतालः

अथ भूयोऽपि वेतालमानेतुं नृपसत्तमः।
स त्रिविक्रमसेनस्तमुपागाच्छिंशपातरुम्॥ ३.१ ॥
तत्रस्थमेतं संप्राप्य मृतदेहगतं पुनः।
स्कन्धे गृहीत्वैवागन्तुं तूष्णीं प्रववृते ततः॥ ३.२॥
प्रयान्तं च तमाह स्म स वेतालोऽस्य पृष्ठगः।
चित्रं नोद्विजसे राजन्निशि कुर्वन्गमागमम्॥ ३.३॥
तदखेदाय भूयस्ते वर्णयामि कथां शृणु।
अस्ति पाटलिपुत्राख्यं ख्यातं भूमण्डले पुरम्॥ ३.४॥
तत्रासीन्नृपतिः पूर्वं नाम्ना विक्रमकेसरी।
गुणानामिव रत्नानामाश्रयं यं व्यधाद्विधिः॥ ३.५॥
तत्र शापावतीर्णोऽभूद्दिव्यविज्ञानवाञ्शुकः।
विदग्धचूदमणिरित्याख्यया सर्वशास्त्रवित्॥ ३.६॥
तेनोपदिष्टां सदृशीं राजपुत्रीं नृपात्मजः।
मागधीमुपयेमे स भार्यां चन्द्रप्रभाभिधाम्॥ ३.७॥
तस्या अपि तथाभूता सर्वविज्ञानशालिनी।
शारिका सोमिका नाम राजपुत्र्याः किलाभवत्॥ ३.८॥
ते चैकपञ्जरस्थे द्वे तत्रास्तां शुकशारिके।
सेवमाने स्वविज्ञानैर्दंपती तौ निजप्रभू॥ ३.९॥
एकदा साभिलाषस्तां शारिकां सोऽब्रवीच्छुकः।
एकशय्यासनाहारं सुभगे भज मामिति॥ ३.१०॥
नाहं पुरुषसंसर्गमिच्छामि पुरुषा यतः।
दुष्टाः कृतघ्ना इति सा सारिका प्रत्युवाच तम्॥ ३.११॥
न दुष्टाः पुरुषा दुष्टा नृशंसहृदयाः स्त्रियः।
इति भूयः शुकेनोक्ते विवादोऽत्रालगत्तयोः॥ ३.१२॥

कृतदासत्वभार्यात्वपणौ तौ शकुनी मिथः।
निश्चयायाथ सभ्यं तं राजपुत्रमुपेयतुः॥३.१३॥
स विवादपदं श्रुत्वा तयोरास्थानगः पितुः।
कथं कृतघ्नाः पुरुषा ब्रूहीत्याह स्म शारिकाम्॥३.१४॥
ततः सा श्रृणुतेत्युक्त्वा निजपक्षप्रसिद्धये।
पुंदोषाख्यायिनीमेतां शारिकाकथयत्कथाम्॥३.१५॥
अस्ति कामन्दिका नाम या महानगरी भुवि।
अर्थदत्ताभिधानोऽस्ति वणिक्तस्यां महाधनः॥३.१६॥
धनदत्ताभिधानश्च पुत्रस्तस्योदपद्यत।
पितर्युपरते सोऽपि बभूवोच्छृङ्खलो युवा॥३.१७॥
द्यूतादिसङ्गे दूर्ताश्च मिलित्वा तमपातयन्।
कामं व्यसनवृक्षस्य मूलं दुर्जनसंगतिः॥३.१८॥
अचिराद्व्यसनक्षीणधनो दौर्गत्यलज्जया।
सोऽथ त्यक्त्वा स्वदेशं तं भ्रान्तुं देशान्तराण्यगात्॥३.१९॥
गच्छंश्च चन्दनपुरं नाम स्थानमवाप्य सः।
विवेश भोजनार्थी सन्नेकस्य वणिजो गृहम्॥३.२०॥
स वणिक्सुकुमारं तं दृष्ट्वा पृष्ट्वान्वयादिकम्।
ज्ञात्वा कुलीनं सत्कृत्य स्वीचक्रे दैवयोगतः॥३.२१॥
ददौ च सधनां तस्मै नाम्ना रत्नावलीं सुताम्।
ततः स धनदत्तोऽत्र तस्थौ श्वशुरवेश्मनि॥३.२२॥
दिनेष्वेव च यातेषु सुखविस्मृतदुर्गतिः।
स्वदेशं गन्तुकामोऽभूत्प्राप्तार्थो व्यसनोन्मुखः॥३.२३॥
ततोऽनुमान्य कथमप्यवशं श्वशुरं शठः।
तं दुहित्रेकसंतानं गृहीत्वा तामलंकृताम्॥३.२४॥
भार्यां रत्नावलीं युक्तामेकया वृद्धया स्त्रिया।
स आत्मना तृतीयः सन्देशात्प्रस्थितवांस्ततः॥३.२५॥
क्रमात्प्राप्याटवीं दूरामुक्त्वा तस्करजां भियम्।
गृहीत्वाभरणं तस्या भार्यायाः स्वीचकार सः॥३.२६॥
दृश्यतां द्यूतवेश्यादिकष्टव्यसनसङ्गिनाम्।
हृदयं हा कृतघ्नानां पुंसां निस्त्रिंशकर्कशम्॥३.२७॥

सोऽथ पापोऽर्थहेतोस्तां भार्यां गुणवतीमपि।
हन्तुं श्वभ्रे निचिक्षेप तया वृद्धस्त्रिया युताम्॥ ३.२८॥
क्षिप्त्वैव च गते तस्मिन्साथ वृद्धा व्यपद्यत।
तद्भार्या तु लतागुल्मविघ्नया न व्यपादि सा॥ ३.२९॥
उत्तस्थौ च ततः श्वभ्रात्क्रोशन्ती करुणं शणैः।
आलम्ब्य तृणगुल्मादि सशेषत्वात्किलायुषः॥ ३.३०॥
आययौ विक्षताङ्गी च पृष्ट्वा मार्गं पदे पदे।
यथागतेनैव पथा कृच्छ्रात्तत्सदनं पितुः॥ ३.३१॥
तत्राकस्मात्तथाभूता प्राप्ता पृष्टा ससंभ्रमम्।
मात्रा पित्रा च रुदती साध्वी सैवमभाषत॥ ३.३२॥
मुषिताः स्म पथि स्तेनैर्नीतो बद्धा च मत्पतिः।
वृद्धा मृता निपत्यापि श्वभ्रे नाहं मृता पुनः॥ ३.३३॥
अथागतेन केनापि पथिकेन कृपालुना।
उद्धृताहं ततः श्वभ्रात्प्राप्तास्मीह च दैवतः॥ ३.३४॥
एवमुक्तवती मात्रा पित्रा चाश्वासिता ततः।
भर्तृचिन्तैव सा तस्थौ तत्र रत्नावली सती॥ ३.३५॥
याति काले च तद्भर्ता स स्वदेशगतः पुनः।
द्यूतक्षपिततद्वित्तो दनदत्तो व्यचिन्तयत्॥ ३.३६॥
आनयामि पुनर्गत्वा मार्गित्वा श्वशुराद्धनम्।
गृहे स्थिता मे त्वत्पुत्रीत्यभिधास्ये च तत्र तम्॥ ३.३७॥
एवं स हृदये ध्यात्वा प्रायाच्छ्वशुरवेश्म तत्।
प्राप्तं च तत्र तं दूरात्स्वभार्या पश्यति स्म सा॥ ३.३८॥
धावित्वा चापतत्तस्य सा पापस्यापि पादयोः।
दुष्टेऽपि पत्यौ साध्वीनां नान्यथावृत्तिमानसम्॥ ३.३९॥
भीताय च ततस्तस्मै तदशेषं न्यवेदयत्।
यन्मृषा चौरपातादि पित्रोः प्राग्वर्णितं तया॥ ३.४०॥
ततस्तया समं तत्र निर्भयः श्वाशुरे गृहे।
प्रविष्टः श्वशुराभ्यां स हर्षाद्दृष्ट्वाभ्यनन्द्यत॥ ३.४१॥
दिष्ट्या जीवन्नयं मुक्तश्चौरैरिति महोत्सवः।
तेन तच्छ्वशुरेणाथ चक्रे मिलितबन्धुना॥ ३.४२॥

ततः स धनदत्तोऽत्र भुञ्जानः श्वशुरश्रियम्।
रत्नावल्या तया साकमासीत्पत्न्या यथासुखम्॥ ३.४३॥
एकदा तत्र रात्रौ च स नृशंसश्चकार यत्।
कथोपरोधतः शान्तमवाच्यमपि कथ्यते॥ ३.४४॥
हत्वाङ्कसुप्तां भार्यां तां तदाभरणसंचयम्।
अपहृत्य ततः प्रायात्स स्वदेशमलक्षितः॥ ३.४५॥
ईदृशाः पुरुषाः पापा इति शारिकयोदिते।
त्वमिदानीं वदेत्याह राजपुत्रस्तदा शुकम्॥ ३.४६॥
ततो जगाद स शुको देव दुःसहसाहसाः।
स्त्रियो दुश्चरिताः पापास्तथा च श्रूयतां कथा॥ ३.४७॥
अस्ति हर्षवती नाम नगरी तत्र चाभवत्।
अग्रणीर्धर्मदत्ताख्यो बहुकोटीश्वरो वणिक्॥ ३.४८॥
वसुदत्ताभिधाना च रूपेऽनन्यसमा सुता।
बभूव तस्य वणिजः प्राणेभ्योऽप्यधिकप्रिया॥ ३.४९॥
सा च तेन समानाय रूपयौवनशालिने।
दत्ता वराङ्गनानेत्रचकोरामृतरश्मये॥ ३.५०॥
नाम्ना समुद्रदत्ताय वणिक्पुत्राय साधवे।
नगर्यामार्यजुष्टायां ताम्रलिप्त्यां निवासिने॥ ३.५१॥
कदाचित्सा स्वदेशस्थे पत्यौ स्वस्य पितुर्गृहे।
स्थिता वणिक्सुता दूरात्कंचित्पुरुषमैक्षत॥ ३.५२॥
तं युवानं सुकान्तं सा चपला मारमोहिता।
गुप्तं सखीमुखानीतं भेजे प्रच्छन्नकामुकम्॥ ३.५३॥
ततःप्रभृति तेनैव सह तत्र सदा रहः।
रात्रौ रात्रावरंस्तासौ तदेकासक्तमानसा॥ ३.५४॥
एकदा च स कौमारः पतिस्तस्याः स्वदेशतः।
आजगामात्र तत्पित्रोः प्रमोद इव मूर्तिमान्॥ ३.५५॥
सोत्सवे च दिने तस्मिन्सा नक्तं कृतमण्डना।
मात्रानुप्रेषिता भेजे शय्यास्थापि न तं पतिम्॥ ३.५६॥
प्रार्थिता तेन चालीकसुप्तं चक्रेऽन्यमानसा।
पानमत्तोऽध्वखिन्नश्च सोऽपि जह्रेऽथ निद्रया॥ ३.५७॥

ततश्च सुप्ते सर्वस्मिन्भुक्तपीते जने शनैः।
संधिं भित्त्वा विवेशात्र चौरो वासगृहान्तरे॥ ३.५८॥
तत्कालं तमपश्यन्ती साप्युत्थाय वणिक्सुता।
स्वजारकृतसंकेता निरगान्निभृतं ततः॥ ३.५९॥
तदालोक्य स चौरोऽत्र विघ्नितेच्छो व्यचिन्तयत्।
येषामर्थे प्रविष्टोऽहं तैरेवाभरणैर्वृता॥ ३.६०॥
निशीथे निर्गतैषा तद्वीक्षेऽहं सा क्व गच्छति।
इत्याकलय्य निर्गत्य स चौरस्तां वणिक्सुताम्॥ ३.६१॥
वसुदत्तामनु ययौ दत्तदृष्टिरलक्षितः।
सापि पुष्पादिहस्तैकससंकेतसखीयुता॥ ३.६२॥
गत्वा बाह्यं प्रविष्टाभूदुद्यानं नातिदूरगम्।
तत्रापश्यच्च तं वृक्षे लम्बमानं स्वकामुकम्॥ ३.६३॥
संकेतकागतं रात्रौ लब्ध्वा नगररक्षिभिः।
उल्लम्बितं चौरबुद्ध्या पाशकण्ठं मृतं स्थितम्॥ ३.६४॥
ततः सा विह्वलोद्भ्रान्ता हा हतास्मीति वादिनी।
पपात भूमौ कृपणं विलपन्ती रुरोद च॥ ३.६५॥
अवतार्याथ वृक्षात्तं गतासुं निजकामुकम्।
उपवेश्याङ्गरागेण पुष्पैश्चालंचकार सा॥ ३.६६॥
समालिङ्ग्य च निःसंज्ञं रागशोकान्धमानसा।
उन्नमय्य मुखं यावत्तस्यार्ता परिचुम्बति॥ ३.६७॥
तावत्स तस्याः सहसा निर्जीवः परपूरुषः।
वेतालानुप्रविष्टः सद्दन्तैश्चिच्छेद नासिकाम्॥ ३.६८॥
तेन सा विह्वला तस्मात्सव्यथापसृताप्यहो।
किं स्विज्जीवेदिति हता पुन एत्य तमैक्षत॥ ३.६९॥
दृष्ट्वा च वीतवेतालं निश्चेष्टं मृतमेव तम्।
सा भीता परिभूता च चचाल रुदती शनैः॥ ३.७०॥
तावच्छन्नः स्थितः सोऽथ चौरः सर्वं व्यलोकयत्।
अचिन्तयच्च किमिदं पापया कृतमेतया॥ ३.७१॥
अहो बताशयः स्त्रीणां भीषणो घनतामसः।
अन्धकूप इवागाधः पाताय गहनः परम्॥ ३.७२॥

तदिदानीमियं किं नु कुर्यादिति विचिन्त्य सः।
कौतुकाद्दूरतश्चौरो भूयोऽप्यनुससार ताम्॥ ३.७३॥
सापि गत्वा प्रविश्यैव तत्सुप्तस्थितभर्तृकम्।
गृहं तदा स्वकं प्रोच्चैः प्ररुदत्येवमब्रवीत्॥ ३.७४॥
परित्रायध्वमेतेन दुष्टेन मम नासिका।
छिन्ना निरपराधाया भर्तृरूपेण शत्रुणा॥ ३.७५॥
श्रुत्वैतं मुहुराक्रन्दं तस्याः सर्वे ससंभ्रमम्।
उदतिष्ठन्प्रबुध्यात्र पतिः परिजनः पिता॥ ३.७६॥
एत्याथ तत्पिता दृष्ट्वा तामार्द्रच्छिन्ननासिकाम्।
क्रुद्धस्तं बन्धयामास भार्याद्रोहीति तत्पतिम्॥ ३.७७॥
स तु नैवाब्रवीत्किंचिद्बध्यमानोऽपि मूकवत्।
विपर्यस्तेषु सर्वेषु शृण्वत्सु श्वशुरादिषु॥ ३.७८॥
ततो ज्ञात्वैव तच्चौरे तस्मिन्नपसृते लघु।
कोलाहलेन तस्यां च व्यतीतायां क्रमान्निशि॥ ३.७९॥
स निन्ये वणिजा तेन श्वशुरेण वणिक्सुतः।
राजान्तिकं तया सार्धं भार्यया छिन्ननासया॥ ३.८०॥
राजा च कृतविज्ञप्तिः स्वदारद्रोह्यसाविति।
तस्यादिशद्वणिक्सूनोर्वधं न्यक्कृततद्वचाः॥ ३.८१॥
ततो वध्यभुवं तस्मिन्नीयमाने सडिण्डिमम्।
उपागम्य स चौरोऽत्र बभाषे राजपूरुषान्॥ ३.८२॥
निःकारणं न वध्योऽयं यथावृत्तं तु वेद्म्यहम्।
मां प्रापयत राजाग्रं यावत्सर्वं वदाम्यतः॥ ३.८३॥
इत्यूचिवान्स नीतस्तैर्नृपस्याग्रं वृताभयः।
आ मूलाद्रात्रिवृत्तान्तं चौरः सर्वं न्यवेदयत्॥ ३.८४॥
अब्रवीच्च न चेद्देव मद्वाचि प्रत्ययस्तव।
तत्सा नासा मुखे तस्य शवस्याद्यापि वीक्ष्यताम्॥ ३.८५॥
तच्छ्रुत्वा वीक्षितुं भृत्यान्प्रेष्य सत्यमवेत्य तत्।
स राजा तं वणिक्पुत्रं मुक्तवान्वधनिग्रहात्॥ ३.८६॥
तां च कर्णावपि छित्वा दुष्टां देशान्निरस्तवान्।
तद्भार्यां श्वशुरं चास्य तं सर्वस्वमदण्डयत्॥ ३.८७॥

चौरं च तं पुराध्यक्षं तुष्टश्चक्रे स भूपतिः।
एवं स्त्रियो भवन्तीह निसर्गविषमाः शठाः॥ ३.८८॥
इत्युक्तवानेव शुको भूत्वा चित्ररथाभिधः।
क्षीणेन्द्रशापो गन्धर्वो दिव्यरूपो दिवं ययौ॥ ३.८९॥
शारिका सापि तत्कालं भूत्वा स्वःस्त्री तिलोत्तमा।
तथैव क्षीणतच्छापा जगाम सहसा दिवम्॥ ३.९०॥
विवादश्चाप्यनिर्णीतः सभायां सोऽभवत्तयोः।
इत्याख्याय कथां भूयस्तं वेतालोऽब्रवीन्नृपम्॥ ३.९१॥
तद्भवान्वक्तु किं पापाः पुरुषाः किमुत स्त्रियः।
अजल्पतो जान तस्ते शिरो यस्यति खण्डशः॥ ३.९२॥
एतन्निशम्य वचनं वेतालस्यांसवर्तिनस्तस्य।
स जगाद भूपतिस्तं योगेश्वर योषितः पापाः॥ ३.९३॥
पुरुषः कोऽपि हि तादृक्क्कापि कदाचिद्भवेद्दुराचारः।
प्रायः सर्वत्र सदा स्त्रियस्तु तादृग्विधा एव॥ ३.९४॥
इत्युक्तवतो नृपतेः प्राग्वत्स्कन्धात्स तस्य वेतालः।
नष्टोऽभूत्स च राजा जग्राह पुनस्तदानयनयत्नम्॥ ३.९५॥

# चतुर्थो वेतालः

ततो गत्वा पुनस्तस्य निकटं शिंशपातरोः।
स त्रिविक्रमसेनोऽत्र श्मशानं निशि भूपतिः॥४.१॥
लब्ध्वा मुक्तात्तहासं तं वेतालं नृशरीरगम्।
निःकम्पः स्कन्धमारोप्य तूष्णीमुदचलत्ततः॥४.२॥
चलन्तं च तमंसस्थो वेतालः सोऽब्रवीत्पुनः।
राजन्कुभिक्षोरेतस्य कृते कोऽयं तव श्रमः॥४.३॥
आयासे निष्फलेऽमुष्मिन्विवेको बत नास्ति ते।
तदिमां शृणु मत्तस्त्वं कथां पथि विनोदिनीम्॥४.४॥
अस्ति शोभावती नाम सत्याख्या नगरी भुवि।
तस्यां च शूद्रकाख्योऽभूद्भूपतिः प्राज्यविक्रमः॥४.५॥
यस्य जज्वाल जयिनः प्रतापज्वलनो निशम्।
बन्दीकृतारिललनाधूतचामरमारुतैः॥४.६॥
अलुप्तधर्मचरणस्फीता मन्ये वसुंधरा।
राज्ञि यस्मिन्विसस्मार रामादीनपि भूपतीन्॥४.७॥
तं कदाचिन्महीपालं प्रियशूरमुपाययौ।
सेवार्थं मालवादेको नम्ना वीरवरो द्विजः॥४.८॥
यस्य धर्मवती नाम भार्या सत्ववरः सुतः।
कन्या वीरवती चेति त्रयं गृहपरिच्छदः॥४.९॥
सेवापरिच्छदश्चान्यत्त्रयं कट्यां कृपाणिका।
करे करतलैकत्र चारु चर्म परत्र च॥४.१०॥
तावन्मात्रपरीवारो दीनारशतपञ्चकम्।
प्रत्यहं प्रार्थयामास राज्ञस्तस्मात्स वृत्तये॥४.११॥
राजापि स तमाकारसूचितोदारपौरुषम्।
वीक्ष्य तस्मै ददौ वृत्तिं सूद्रकस्तां यथेप्सिताम्॥४.१२॥

अल्पे परिकरेऽप्येभिरियद्भिः स्वर्णरूपकैः।
किमेष व्यसनं पुष्णात्यथ कंचन सद्व्ययम्॥४.१३॥
इत्यन्वेष्टुं समाचारं कौतुकात्स महीपतिः।
प्रच्छन्नान्स्थापयामास चारानस्यात्र पृष्ठतः॥४.१४॥
स च वीरवरः प्रातः कृत्वा भूपस्य दर्शनम्।
स्थित्वा च तस्या मध्याह्नं सिंहद्वारे धृतायुधः॥४.१५॥
गत्वा स्ववृत्तिलब्धानां दीनाराणां शतं गृहे।
भोजनार्थं स्वभार्याया हस्ते प्रादात्किलान्वहम्॥४.१६॥
वस्त्राङ्गरागताम्बूलं क्रीणाति स्म शतेन च।
शतं स्नात्वा च पूजार्थं व्यधाद्विष्णोः शिवस्य च॥४.१७॥
विप्रेभ्यः कृपणेभ्यश्च ददौ दानं शतद्वयम्।
एवं विभेजे पञ्चापि तानि नित्यं शतान्यसौ॥४.१८॥
ततः कृत्वाग्निकार्यादि भूक्त्वा गत्वैकको निशि।
सिंहद्वारे पुनस्तस्थौ पाणौ करतलां दधत्॥४.१९॥
एतां सततचर्यां च तस्य वीरवरस्य सः।
राजा चारमुखाच्छ्रुत्वा तुतोष हृदि शुद्रकः॥४.२०॥
निवारयामास च तांश्चारांस्तस्यानुमार्गगान्।
मेने विशेषपूजार्हं पुरुषातिशयं च तम्॥४.२१॥
अथ यातेषु दिवसेष्ववहेलावलङ्घिते।
ग्रीष्मे वीरवरेणात्र सुप्रचण्डार्कतेजसि॥४.२२॥
तदीर्ष्यात इवोद्भूतविद्युत्करतलां दधत्।
धाराप्रहारी निनदन्नाजगाम घनागमः॥४.२३॥
तदा च घोर मेघौघे प्रवर्षति दिवानिशम्।
सिंहद्वारे तथैवासीत्सोऽत्र वीरवरोऽचलः॥४.२४॥
तं च दृष्ट्वा दिवा राजा प्रासादाग्रात्स शूद्रकः।
निशि भूयस्तदारोहज्जिज्ञासुस्तस्य तां स्थितिम्॥४.२५॥
जगाद च ततः को नु सिंहद्वारे स्थितोऽत्र भोः।
तच्छ्रुत्वाहं स्थितोऽत्रेति सोऽपि वीरवरोऽब्रवीत्॥४.२६॥
अहो सुदृढसत्त्वोऽयं भक्तो वीरवरो मयि।
तदेष प्रापणीयो मेऽवश्यमेव महत्पदम्॥४.२७॥

इति संचिन्त्य नृपतिः प्रासादादवतीर्य सः।
शूद्रकः शयनं भेजे प्रविश्यान्तःपुरं ततः॥४.२८॥
अन्येद्युश्च भृशं मेघे धारासारेण वर्षति।
प्रदोषे गुप्तभवने काले तमसि जृम्भिते॥४.२९॥
पुनः स राजा जिज्ञासुः प्रासादमधिरुह्य तम्।
सिंहद्वारे स्थितः कोऽत्रेत्येकाकी प्राह तं स्फुटम्॥४.३०॥
अहं स्थित इति प्रोक्ते पुनर्वीरवरेण च।
यावद्विस्मयते सोऽत्र राजा तद्धैर्यदर्शनात्॥४.३१॥
तावद्विदूरे शुश्राव सहसा रुदतीं स्त्रियम्।
विषादविकलामेकां प्रलापकरुणस्वनम्॥४.३२॥
न मे राष्ट्रे पराभूतो न दरिद्रो न दुःखितः।
कश्चिदस्ति तदेषा का रोदित्येकाकिनी निशि॥४.३३॥
इति चाचिन्तयच्छ्रुत्वा स जातकरुणो नृपः।
आदिदेश च तं वीरवरमेकमधः स्थितम्॥४.३४॥
भो वीरवर शृण्वेषा दूरे स्त्री कापि रोदिति।
कासौ रोदिति किं चेति त्वया गत्वा निरूप्यताम्॥४.३५॥
तच्छ्रुत्वा स तथेत्युक्त्वा गन्तुं वीरवरस्ततः।
प्रावर्तत निबद्धासिधेनुः करतलाकरः॥४.३६॥
न च मेघान्धकारं तज्ज्वलद्विद्युद्विलोचनम्।
स्थूलधाराशिलावार्षि रक्षोरूपमजीगणत्॥४.३७॥
प्रस्थितं वीक्ष्य तादृश्यां तस्यां रात्रौ तमेककम्।
करुणाकौतुकाविष्टो राजा प्रासादपृष्ठतः॥४.३८॥
आवतीर्य गृहीतासिरेकाकी तस्य पृष्ठतः।
सोऽपि प्रतस्थे तत्रैव शुद्रकोऽनुपलक्षितः॥४.३९॥
स च वीरवरो गत्वा रुदितानुसृतिक्रियः।
बहिर्नगर्याः प्रापैकं सरस्तत्र ददर्श च॥४.४०॥
हा शूर हा कृपालो हा त्यागिञ्शून्या त्वया कथम्।
वत्स्यामीत्यादि रुदतीं तां स्त्रियं वारिमध्यगाम्॥४.४१॥
का त्वं रोदिषि किं चैवमित्यन्वक्प्राप्तभूपतिः।
पप्रच्छ तां च साश्चर्यस्ततः साप्येवमभ्यधात्॥४.४२॥

भो वीरवर जानीहि वत्स मां पृथिवीमिमाम्।
तस्या ममाधुना राजा शूद्रको धार्मिकः पतिः॥४.४३॥
तृतीये च दिने तस्य राज्ञो मृत्युर्भविष्यति।
तादृशं च पतिं प्राप्स्याम्यहमन्यं नृपं कुतः॥४.४४॥
अतस्तमनुशोचामि दुःखितात्मानमेव च।
एतच्छ्रुत्वा स तां त्रस्त इव वीरवरोऽब्रवीत्॥४.४५॥
हे देवि कच्चिदप्यस्ति कोऽप्युपायः स तादृशः।
येनास्य न भवेन्मृत्युर्जगद्रक्षामणेः प्रभोः॥४.४६॥
इति तद्वचनं श्रुत्वा सा जगाद वसुंधरा।
एकोऽस्त्युपायस्तं चैकः कर्तुं शक्तो भवानिति॥४.४७॥
ततो वीरवरोऽवादीत्तर्हि देवि वद द्रुतम्।
यावत्तत्साधयाम्याशु कोऽर्थः प्राणैर्ममान्यथा॥४.४८॥
तच्छ्रुत्वोवाच वसुधा विरः कोऽन्यस्त्वया समः।
स्वामिभक्तस्तदेतस्य शर्मोपायमिमं शृणु॥४.४९॥
राज्ञा कृतप्रतिष्ठास्ति यैषा राजकुलान्तिके।
उत्तमा चण्डिका देवी सांनिध्योत्कर्षशालिनी॥४.५०॥
तस्यै सत्त्ववरं पुत्रमुपहारीकरोषि चेत्।
तन्नैष राजा म्रियते जीवत्यन्यत्समाशतम्॥४.५१॥
अद्यैव चैतद्भवता कृतं चेदस्ति तच्छिवम्।
अन्यथास्य तृतीयेऽह्नि प्राप्ते नास्त्येव जीवितम्॥४.५२॥
इत्युक्तः स तया पृथ्व्या वीरो वीरवरस्तदा।
यामि देवि करोम्येतदधुनैवेत्यभाषत॥४.५३॥
ततो भद्रं तवेत्युक्त्वा वसुधा सा तिरोदधे।
तच्च सर्वं स शुश्राव गुप्तमन्वक्स्थितो नृपः॥४.५४॥
ततश्च गूढे जिज्ञासौ तस्मिन्राज्ञ्यनुगच्छति।
शूद्रके त्वरितं गेहं निशि वीरवरो ययौ॥४.५५॥
तत्र पुत्रोपहारोऽस्य राजार्थे धरया यथा।
उक्तस्तथाब्रवीत्पत्न्यै धर्मवत्यै विबोध्य सः॥४.५६॥
तच्छ्रुत्वा सा तमाह स्म नाथ कार्यं शिवं प्रभोः।
तत्प्रबोध्य सुतस्यास्य शिशोर्वक्तु भवानिति॥४.५७॥

ततः प्रबोध्य सुप्तं तं बालं सत्त्ववरं सुतम्।
आख्याय तं च वृत्तान्तमेवं वीरवरोऽब्रवीत्॥४.५८॥
तत्पुत्र चण्डिकादेव्या उपहारीकृते त्वयि।
राजा जीवत्यसौ नो चेत्तृतीयेऽह्नि विपद्यते॥४.५९॥
एतच्छ्रुत्वैव बालोऽपि यथार्थं नाम दर्शयन्।
अक्लीबचित्तः पितरं तं स सत्त्ववरोऽब्रवीत्॥४.६०॥
कृतार्थोऽहं मम प्राणै राजा चेत्तात जीवति।
भुक्तस्य हि तदन्नस्य दत्ता स्यान्निष्कृतिर्मया॥४.६१॥
तत्किं विलम्ब्यते नीत्वा भगवत्याः पुरोऽधुना।
उपहारीकुरुध्वं मामस्तु शान्तिर्मया प्रभोः॥४.६२॥
इति सत्त्ववरेणोक्ते तेन वीरवरोऽत्र सः।
साधु सत्यं प्रसूतोऽसि मत्तः पुत्रेत्यभाषत॥४.६३॥
एतत्सोऽन्वागतो राजा सर्वं श्रुत्वा बहिः स्थितः।
अह एषां समं सत्त्वं सर्वेषामित्यचिन्तयत्॥४.६४॥
ततो वीरवरः स्कन्धे कृत्वा सत्त्ववरं सुतम्।
भर्या धर्मवती चास्य कन्यां वीरवतीमपि॥४.६५॥
उभौ तौ ययतुस्तस्यां रात्रौ तच्चण्डिकागृहम्।
राजापि शूद्रकश्छन्नः पृष्टतः स तयोर्ययौ॥४.६६॥
तत्र देव्याः पुरः स्कन्धात्सोऽथ पित्रावतारितः।
देवीं सत्त्ववरो नत्वा धैर्यराशिर्व्यजिज्ञपत्॥४.६७॥
मम मूर्धोपहारेण राजा जीवतु शुद्रकः।
अन्यद्वर्षशतं देवि कुर्याद्राज्यमकण्टकम्॥४.६८॥
एवमुक्तवतस्तस्य साधु साध्वित्युदीर्य सः।
सूनोः सत्त्ववरस्याथ कृष्ट्वा करतलां शिशोः॥४.६९॥
छित्त्वा शिरश्चण्डिकायै देव्यै वीरवरो ददौ।
मत्पुत्रेणोपहारेण राजा जीवत्विति ब्रुवन्॥४.७०॥
साधु कः स्वामिभक्तोऽन्यः समो वीरवर त्वया।
येनैवमेकसत्पुत्रप्राणव्ययविधायिना॥४.७१॥
दत्तो जीवश्च राज्यं च शुद्रकस्यास्य भूपतेः।
इत्यन्तरिक्षादुदगात्तत्क्षणं तत्र भारती॥४.७२॥

तच्च सर्वं नृपे तस्मिंश्छन्ने शृण्वति पश्यति।
कन्या वीरवती सा तु बाला वीरवरात्मजा॥४.७३॥
उपेत्याश्लिष्य मूर्धाणं तस्य भ्रातुर्हतस्य तम्।
विलपन्त्युरुशोकान्धा हृत्स्फोटेन व्यपद्यत॥४.७४॥
ततो वीरवरं भार्या धर्मवत्येवमब्रवीत्।
राज्ञस्तावत्कृतं श्रेयस्तदिदानीं वदामि ते॥४.७५॥
निर्ज्ञाना यत्र बालापि भ्रातृशोकादियं मृता।
नष्टेऽपत्यद्वयेऽप्यस्मिंस्तत्र किं जीवितेन मे॥४.७६॥
प्रागेव राज्ञः श्रेयोर्थं मूढया स्वशिरो मया।
देव्यै नोपहृतं तस्माद्देह्यनुज्ञां ममाधुना॥४.७७॥
प्रविषम्यनलं तावदात्तापत्यकलेवरा।
इत्याग्रहाद्वदन्तीं तां सोऽथ वीरवरोऽब्रवीत्॥४.७८॥
एवं कुरुष्व भद्रं ते का हि संप्रति ते रतिः।
अपत्यदुःखैकमये जीवितव्ये मनस्विनि॥४.७९॥
किं न दत्तो मयैवात्मेत्येषा मा भूच्च ते व्यथा।
दद्यां किं नाहमात्मानमन्यसाध्यं भवेद्यदि॥४.८०॥
तत्प्रतीक्षस्व यावत्ते चितामत्र करोम्यहम्।
अमीभिर्दारुभिर्देवीक्षेत्रनिर्माणसंभृतैः॥४.८१॥
इत्युक्त्वा दारुभिस्तैः स कृत्वा वीरवरश्चिताम्।
दीपाग्रे ज्वालयामास न्यस्तापत्यशवद्वयाम्॥४.८२॥
ततो धर्मवती पत्नी पतित्वा सास्य पादयोः।
प्रणम्य देवीं चण्डीं तां व्यजिज्ञपदपांसुला॥४.८३॥
जन्मान्तरेऽप्ययं भूयादार्यपुत्रः पतिर्मम।
एतत्प्रभोस्तु राज्ञोऽस्तु मद्देहेनामुना शिवम्॥४.८४॥
इत्युदीर्यैव सा साध्वी तस्मिन्नम्भोवहेलया।
ज्वालाकलापजटिले निपपात चितानले॥४.८५॥
ततश्च चिन्तयामास वीरो वीरवरोऽत्र सः।
निष्पन्नं राजकार्यं मे वाग्दिव्या ह्युद्गता यथा॥४.८६॥
भुक्तस्य चान्नपिण्डस्य जातोऽहमनृणः प्रभोः।
तदिदानीं ममैकस्य केयं जीवितगृध्नुता॥४.८७॥

भरणीयं प्रियं कृत्स्नं व्ययीकृत्य कुटुम्बकम्।
जीवयन्नेकमात्मानं मादृशः को हि शोभते॥४.८८॥
तत्किमात्मोपहारेणाप्येतां प्रीणामि नाम्बिकाम्।
इत्यालोच्य स देवीं तां स्तुत्या प्रागुपतस्थिवान्॥४.८९॥
जय महिषासुरमारिणि दारिणि रुरुदानवस्य शूलकरे।
जय विबुधोत्सवकारिणि धारिणि भुवनत्रयस्य मातृवरे॥४.९०॥
जय जगदर्चितचरणे शरणे निःश्रेयसस्य भक्तानाम्।
जय धृतभास्करकिरणे हरणे दुरितान्धकारवृन्दानाम्॥४.९१॥
जय कालि जय कपालिनि जय कङ्कालिनि शिवे नमस्तेऽस्तु।
शूद्रकनृपतेरधुना प्रसीद मन्मस्तकोपहारेण॥४.९२॥
इत्युपस्थाय देव्यां स तस्यां वीरवरः पुनः।
सद्यः करतलाघातेनोत्तमाङ्गं स्वमच्छिनत्॥४.९३॥
तदालोक्याखिलं तत्र छन्नस्थः शुद्रको नृपः।
साकुलश्च सदुःखश्च साश्चर्यश्च व्यचिन्तयत्॥४.९४॥
अहो किमप्यनेनैतदन्यत्रादृष्टमश्रुतम्।
साधुना सकुटुम्बेन दुःकरं मत्कृते कृतम्॥४.९५॥
विचित्रेऽप्यत्र संसारे धीरः स्यादीदृशः कुतः।
अख्यापयन्प्रभो अर्थे परोक्षं यो ददात्यसून्॥४.९६॥
एतस्य चोपकारोस्य न कुर्यां सदृशं यदि।
तन्मे का प्रभुता किं च जीवितव्यं पशोरिव॥४.९७॥
इति संचिन्त्य नृपतिः खड्गमाकृष्य कोपतः।
उपेत्य शूद्रको देवीं तां प्रवीरो व्यजिज्ञपत्॥४.९८॥
सततानुप्रपन्नस्य भगवत्यधुनामुना।
मम मूर्धोपहारेण सुप्रीता कुर्वनुग्रहम्॥४.९९॥
अयं वीरवरो विप्रो नामानुगुणचेष्टितः।
मदर्थमुज्झितप्राणः सकुटुम्बोऽपि जीवतु॥४.१००॥
इत्युदीर्यासिना राजा शिरश्छेत्तुं स शूद्रकः।
यावत्प्रवर्तते तावदुदभूद्भारती दिवः॥४.१०१॥
मा साहसं कृथास्तुष्टा सत्त्वेनानेन ते ह्यहम्।
प्रत्युज्जीवतु सापत्यदारो वीरवरो द्विजः॥४.१०२॥

इत्युक्त्वा व्यरमद्वाक्सा स चोत्तस्थौ सपुत्रकः।
साकं दुहित्रा पत्न्या च जीवन्वीरवरोऽक्षतः॥४.१०३॥
तद्विलोक्याद्भुतं राजा छन्नो भूत्वा पुनश्च सः।
पश्यन्नतृप्तस्तामासीद्दृष्ट्या हर्षाश्रुपूर्णया॥४.१०४॥
सोऽपि वीरवरो दृष्ट्वा सुप्तोत्थित इवाशु तम्।
पुत्रदारं तथात्मानमभूद्विभ्रान्तमानसः॥४.१०५॥
पप्रच्छ च पृथङ्नामग्राहं दारसुतान्स तान्।
भस्मीभूताः कथं यूयं जीवन्तः पुन उत्थिताः॥४.१०६॥
मयापि स्वशिरश्छिन्नं जीवाम्येषश्च किं न्विदम्।
किं विभ्रमोऽयमाहो स्वित्सुस्पष्टो देव्यनुग्रहः॥४.१०७॥
एवं वदन्स तैरूचे दारापत्यैरलक्षितः।
देव्यनुग्रह एवायं जीवामो यदमी इति॥४.१०८॥
ततः स तत्तथा मत्वा नत्वा वीरवरोऽम्बकाम्।
आदाय पुत्रदारांस्तान्सिद्धकार्यो गृहं ययौ॥४.१०९॥
तत्र प्रवेश्य पुत्रं तं भार्यां दुहितरं च ताम्।
सिंहद्वारमगाद्राज्ञो रात्रौ तस्यां स पूर्ववत्॥४.११०॥
राजा स शूद्रकोऽप्येतद्दृष्ट्वा सर्वमलक्षितः।
गत्वारुरोह स्वावासप्रासादं तं पुनस्तदा॥४.१११॥
व्याहरच्च स्थितः कोऽत्र सिंहद्वारीति पृष्ठतः।
ततो वीरवरोऽवादीत्सैष तिष्ठाम्यहं प्रभो॥४.११२॥
देवादेशाद्गतश्चाहमभूवं तां स्त्रियं प्रति।
राक्षसीव च सा क्वापि दृष्टनष्टैव मे गता॥४.११३॥
एतच्छ्रुत्वा वचस्तस्य राजा वीरवरस्य सः।
सुतरां विस्मयाविष्टो दृष्टोदन्तो व्यचिन्तयत्॥४.११४॥
अहो समुद्रगम्भीरधीरचित्ता मनस्विनः।
कृत्वाप्यनन्यसामान्यमुल्लेखं नोद्गिरन्ति ये॥४.११५॥
इत्याद्याकलयंस्तूष्णीं प्रासादादवरुह्य सः।
प्रविश्यान्तःपुरं राजा रात्रिशेषं निनाय तम्॥४.११६॥
प्रातश्चास्थानसमये दर्शनोपगतस्थिते।
तस्मिन्वीरवरे प्रीतस्तथा कृत्स्नं स भूपतिः॥४.११७॥

तदीयं रात्रिवृत्तान्तं मन्त्रिभ्यस्तमवर्णयत्।
यथा बभूवुराश्चर्यमोहिता इव तेऽखिलाः॥४.११८॥
ददौ तस्मै सपुत्राय प्रीत्या वीरवराय च।
लाटदेशे ततो राज्यं स कर्णाटयुते नृपः॥४.११९॥
ततोऽत्र तुल्यविभवावन्योन्यस्योपकारिणौ।
आसातां तौ सुखं वीरवरशूद्रकभूपती॥४.१२०॥
इत्याख्याय कथामेतां वेतालोऽत्यद्भुतां तदा।
तं त्रिविक्रमसेनं स राजानमवदत्पुनः॥४.१२१॥
तद्ब्रूहि राजन्नेतेषु वीरः सर्वेषु कोऽधिकः।
पूर्व एव स शापस्ते यदि जानन्न वक्ष्यसि॥४.१२२॥
एतच्छ्रुत्वा स भूपालो वेतालं प्रत्युवाच तम्।
एतेषु शूद्रको राजा प्रवीरः सोऽखिलेष्विति॥४.१२३॥
ततोऽब्रवीत्स वेतालो राजन्वीरवरो न किम्।
सोऽधिको यस्य तुल्योऽस्यां पृथ्व्यामेव न जायते॥४.१२४॥
तत्पत्नी नाधिका किं वा स्त्रीभुता यान्वमन्यत।
तथोपहारपशुतां सूनोः प्रत्यक्षदर्शिनी॥४.१२५॥
स वा सत्त्ववरो नात्र तत्पुत्रोऽभ्यधिकः कथम्।
बालस्यापि सतो यस्य सत्त्वोत्कर्षः स तादृशः॥४.१२६॥
तत्कस्माच्छूद्रकं भूपमेभ्यस्त्वं भाषसेऽधिकम्।
इत्युक्तवन्तं वेतालं स जगाद पुनर्नृपः॥४.१२७॥
मैवं वीरवरस्तावत्स तादृक्कुलपुत्रकः।
तस्य प्राणैः सुतैर्दारैः स्वामिसंरक्षणं व्रतम्॥४.१२८॥
तत्पत्नी सापि कुलजा साध्वी पत्येकदेवता।
भर्तृवर्त्मानुसारेण तस्या धर्मोऽस्तु कोऽपरः॥४.१२९॥
ताभ्यां जातस्तु तद्रूप एव सत्त्ववरोऽपि सः।
यादृशास्तन्तवः कामं तादृशो जायते पटः॥४.१३०॥
येषां प्राणैस्तु भृत्यानां नृपैरात्माभिरक्ष्यते।
तेषामर्थे त्यजन्देहं शूद्रकोऽत्र विशिष्यते॥४.१३१॥

इत्याकर्ण्य वचः स तस्य नृपतेरंसादसंलक्षितो
वेतालः सहसा ययौ निजपदं भूयोऽपि तन्मायया।
राजाप्युच्चलितो बभूव पुनरप्यानेतुमेतं पथा
पूर्वेणैव सुनिश्चितः पितृवने तस्मिन्स तस्यां निशि॥४.१३२॥

# पञ्चमो वेतालः

ततस्तस्य पुनर्गत्वा शिंशपाशाखिनोऽन्तिकम्।
तथैवोल्लम्बमानं तं दृष्ट्वा नरशरीरगम्॥५.१॥
वेतालमवतार्यैव कृत्वास्मै बहु वैकृतम्।
स त्रिविक्रमसेनो द्राग्गन्तुं प्रववृते ततः॥५.२॥
आगच्छन्तं च तं तूष्णीं वेतालः पूर्ववत्पथि।
रात्रौ महाश्मशानेऽत्र स्कन्धस्थो व्याजहार सः॥५.३॥
राजन्नभिनिविष्टोऽसि कष्टेऽत्यन्तप्रियोऽसि च।
तत्ते चेतोविनोदाय वर्णयामि कथां शृणु॥५.४॥
उज्जयिन्यामभूद्विप्रः पुण्यसेनस्य भूपतेः।
अनुजीवी प्रियोऽमात्यो हरिस्वामीति सद्गुणः॥५.५॥
तस्यात्मनोऽनुरूपायां भार्यायां गृहमेधिनः।
गुणवान्सदृशः पुत्रो देवस्वामीत्यजायत॥५.६॥
तद्वच्चानन्य सामान्य रूपलावण्य विश्रुता।
कन्या सोमप्रभा नाम तस्यान्वर्थोदपद्यत॥५.७॥
सा प्रदेया सती कन्या रूपोत्कर्षाभिमानिनी।
मातुर्मुखेन पितरं भ्रातरं च जगाद तम्॥५.८॥
शूरस्य ज्ञानिनो वाहं देया विज्ञानिनोऽपि वा।
अन्यस्मै नास्मि दातव्या कार्यं मज्जीवितेन चेत्॥५.९॥
तच्छ्रुत्वा तादृशं तस्याश्चिन्वन्नेकतमं वरम्।
तत्पिता स हरिस्वामी यावच्चिन्तां वहत्यलम्॥५.१०॥
तावद्व्यसर्जी राज्ञा स पुण्यसेनेन दूत्यया।
संध्यर्थं विग्रहायात दाक्षिणात्यनृपान्तिकम्॥५.११॥
कृतकार्यश्च तत्रासावेकेनाभ्येत्य तां सुताम्।
याचितोऽभूद्द्विजाग्र्येण श्रुततद्रूपसंपदा॥५.१२॥

विज्ञानिनो ज्ञानिनो वा शूराद्वा नापरं पतिम्।
मत्पुत्रीच्छति तत्तेषां मध्यात्कथय को भवान्॥५.१३॥
इत्युक्तस्तेन भार्यार्थः स हरिस्वामिना द्विजः।
अहं जानामि विज्ञानमिति तं प्रत्यभाषत॥५.१४॥
तर्हि तद्दर्शयस्वेति पुन उक्तश्च तेन सः।
विज्ञानी कल्पयामास स्वशक्त्या द्युचरं रथम्॥५.१५॥
मायायन्त्ररथे तत्र तं हरिस्वामिनं क्षणात्।
आरोप्य नीत्वा स्वर्गादीं लोकांस्तस्मा अदर्शयत्॥५.१६॥
आनिनाय च तुष्टं तं तत्रैव कटकं पुनः।
दाक्षिणात्यस्य नृपतेर्यत्रायातः स कार्यतः॥५.१७॥
ततः सोऽस्मै हरिस्वामी प्रतिशुश्राव तां सुताम्।
विज्ञानिने विवाहं च निश्चिकायाह्नि सप्तमे॥५.१८॥
तत्कालमुज्जयिन्यामप्यन्येनैत्य द्विजन्मना।
देवस्वामी स तत्पुत्रः स्वसारं तामयाच्यत॥५.१९॥
ज्ञानिविज्ञानिशूरेभ्यो नान्यमिच्छति सा पतिम्।
इति तेनापि सोऽप्युक्तः शूरमात्मानमभ्यधात्॥५.२०॥
ततो दर्शितशस्त्रास्त्रश्रिये तस्मै द्विजोऽनुजाम्।
देवस्वामी स शूराय दातुं तां प्रत्यपद्यत॥५.२१॥
सप्तमेऽह्नि च तत्रैव विवाहं गणकोक्तितः।
तस्यापि सोऽभ्यधान्मातुः परोक्षं कृतनिश्चयः॥५.२२॥
तन्मातापि हरिस्वामिभार्या तत्कलमेव सा।
केनाप्येत्य तृतीयेन सुतां तां याचिता पृथक्॥५.२३॥
ज्ञानी शूरोऽथ विज्ञानी भर्तास्मद्दुहितुर्मतः।
इत्युक्तश्च तया मातरहं ज्ञानीति सोऽभ्यधात्॥५.२४॥
पृष्ट्वा भूतं भविष्यच्च तस्मै तां ज्ञानिने सुताम्।
प्रतिजज्ञे प्रदातुं साप्यह्नि तत्रैव सप्तमे॥५.२५॥
अन्येद्युश्चागतः सोऽत्र हरिस्वामी यथा कृतम्।
पत्न्यैः पुत्राय चाचख्यौ तं कन्यादाननिश्चयम्॥५.२६॥
तौ च तं स्वकृतं तस्मै भिन्नं भिन्नमवोचताम्।
सोऽपि तेनाकुलो जज्ञे वरत्रयनिमन्त्रणात्॥५.२७॥

अथोद्वाहदिने तस्मिन्हरिस्वामिगृहे वराः।
आययुर्ज्ञानिविज्ञानिशूरास्तत्र त्रयोऽपि ते॥५.२८॥
तत्कालं चात्र सा चित्रं कन्या सोमप्रभा वधुः।
अशङ्कितं गता क्वापि न विचित्याप्यलभ्यत॥५.२९॥
ततोऽब्रवीद्धरिस्वामी ज्ञानिनं तं ससंभ्रमः।
ज्ञानिन्निदानीं ब्रूह्याशु दुहिता मे क्व सा गता॥५.३०॥
तच्छ्रुत्वा सोऽवदज्ज्ञानी राक्षसेनापहृत्य सा।
नीता विन्ध्याटवीं धूमशिखेन वसतिं निजाम्॥५.३१॥
इत्युक्तो ज्ञानिना भीतो हरिस्वामी जगाद सः।
हा धिक्कथं सा प्रप्येत विवाहश्चापि हा कथम्॥५.३२॥
श्रुत्वैतत्प्राह विज्ञानी धीरो भव नयामि वः।
तत्राधुनैव यत्रैषो ज्ञानी वदति तां स्थिताम्॥५.३३॥
इत्युक्त्वा तत्क्षणं कृत्वा रथं सर्वास्त्रसंयुतम्।
तत्रारोप्य हरिस्वामिज्ञानिशूरान्खगामिनि॥५.३४॥
तान्स संप्रापयामास क्षणाद्विन्ध्याटवीभुवि।
ज्ञानिना तां समाख्यातां वसतिं तत्र रक्षसः॥५.३५॥
तत्र तं राक्षसं क्रुद्धं ज्ञातवृत्तान्तनिर्गतम्।
शूरोऽथ योधयामास हरिस्वामिपुरस्कृतः॥५.३६॥
तदाश्चर्यमभूद्युद्धं तयोर्मानुषरक्षसोः।
चित्रास्त्रयोधिनोः स्त्र्यर्थं रामरावणयोरिव॥५.३७॥
क्षणेन च स सङ्ग्रामदुर्मदस्यापि रक्षसः।
अर्धचन्द्रेण बाणेन शूरस्तस्याच्छिनच्छिरः॥५.३८॥
हते रक्षसि तां सोमप्रभामाप्तां तदास्पदात्।
आदाय विज्ञानिरथेनाजग्मुस्ते ततोऽखिलाः॥५.३९॥
हरिस्वामिगृहं प्राप्य तेषां लग्नेऽप्युपस्थिते।
ज्ञानिविज्ञानिशूराणां विवाद उदभून्महान्॥५.४०॥
ज्ञानी जगाद नाहं चेज्जानीयां तदियं कथम्।
प्राप्येत कन्या गूढस्था देया मह्यमसावितः॥५.४१॥
विज्ञानी त्ववदन्नाहं कुर्यां चेद्व्योमगं रथम्।
गमागमौ कथं स्यातां देवानामिव वः क्षणात्॥५.४२॥

कथं स्याच्चारथं युद्धं रथिना रक्षसा सह।
तस्मान्मह्यमियं देया लग्नो ह्येष मयाजितः॥५.४३॥
शूरोऽप्युवाच हन्यां चेन्नाहं तं राक्षसं रणे।
तद्युवाभ्यां कृते यत्नेऽप्येतां कन्यां क आनयेत्॥५.४४॥
तन्मह्यमेषा दातव्येत्येवं तेषु विवादिषु।
हरिस्वामी क्षणं तूष्णीमासीदुद्भ्रान्तमानसः॥५.४५॥
तत्कस्मै सात्र देयेति राजन्वदतु मे भवान्।
न वदिष्यसि जानंश्चेत्तत्ते मूर्धा स्फुटिष्यति॥५.४६॥
इति वेतालतस्तस्माच्छ्रुत्वा मौनं विहाय च।
स त्रिविक्रमसेनस्तमुवाचैवं महीपतिः॥५.४७॥
शूराय सा प्रदातव्या येन प्राणपणोद्यमात्।
अर्जिता बहुवीर्येण हत्वा तं युधि राक्षसम्॥५.४८॥
ज्ञानिविज्ञानिनौ त्वस्य धात्रा कर्मकरौ कृतौ।
सदा गणकतक्षाणौ परोपकरणे न किम्॥५.४९॥
इत्युक्तं मनुजपतेर्निशम्य तस्य स्कन्धाग्रात्सपदि स पूर्ववज्जगाम।
वेतालो निजपदमेव सोऽपि राजानुद्वेगः पुनरपि तं प्रति प्रतस्थे॥५.५०॥

# षष्ठो वेतालः

तत्तो गत्वा पुनस्तस्मात्प्राप्य तं शिंशपातरोः।
वेतालं प्राग्वदादाय स्कन्धे मौनेन भूपतिः॥ ६.१ ॥
स त्रिविक्रमसेनोऽत्र यावदागच्छति द्रुतम्।
तावत्पथि स वेतालो भूयोऽप्येवमुवाच तम्॥ ६.२ ॥
राजन्सुधीः सुसत्त्वश्च भवांस्तेन प्रियोऽसि मे।
अतो विनोदिनीं वच्मि कथां प्रश्नं च मे शृणु॥ ६.३ ॥
आसीद्राजा यशःकेतुरिति ख्यातो महीतले।
तस्य शोभावती नाम राजधान्यभवत्पुरी॥ ६.४॥
तस्यामभून्नगर्यां च गौर्यायतनमुत्तमम्।
तस्य दक्षिणतश्चासीद्गौरीतीर्थाभिधं सरः॥ ६.५॥
तस्याषाढचतुर्दश्यां शुक्लायां प्रतिवत्सरम्।
यात्रायां स्नातुमेति स्म नानादिग्भ्यो महाजनः॥ ६.६ ॥
एकदा च तिथौ तस्यां स्नातुमत्रcraययौ युवा।
रजको धवलो नाम ग्रामाद्ब्रह्मस्थलाभिधात्॥ ६.७ ॥
सोऽपश्यद्रजकस्यात्र तीर्थे स्नानागतां सुताम्।
कन्यां शुद्धपटाख्यस्य नाम्ना मदनसुन्दरीम्॥ ६.८॥
इन्दोर्लावण्यहारिण्या तया स हृतमानसः।
अन्विष्य तन्नामकुले कामार्तोऽथ गृहं ययौ॥ ६.९॥
तत्रानवस्थितस्तिष्ठन्निराहारस्तया विना।
पृष्ठो मात्रार्तया तस्यै तच्छशंस मनोगतम्॥ ६.१० ॥
सा गत्वा विमलाख्याय तत्स्वभर्त्रे न्यवेदयत्।
सोऽप्यागत्य तथावस्थं दृष्ट्वा तं सुतमभ्यधात्॥ ६.११ ॥
किं विषीदसि पुत्रैवमदुष्प्राप्येऽपि वाञ्छिते।
स हि मद्याचितः शुद्धपटो दास्यति ते सुताम्॥ ६.१२ ॥

अन्यूना हि वयं तस्मात्कुलेनार्थेन कर्मणा।
तं वेद्म्यहं स मां वेत्ति तेनैतन्मे न दुःकरम्॥ ६.१३॥
इत्याश्वास्य स तं पुत्रमाहारादौ प्रवर्त्य च।
तद्युक्तो विमलोऽन्येद्युर्ययौ शुद्धपटास्पदम्॥ ६.१४॥
ययाचे चात्र पुत्रस्य तस्यार्थे धवलस्य सः।
कन्यां तस्मात्स चास्मै तां प्रतिशुश्राव सादरम्॥ ६.१५॥
लग्नं निश्चित्य चान्येद्युस्तां स शुद्धपटः सुताम्।
धवलाय ददौ तस्मै तुल्यां मदनसुन्दरीम्॥ ६.१६॥
कृतोद्वाहश्च स तया साकं दर्शनसक्तया।
भार्यया स्वपितुर्गेहं जगाम धवलः कृती॥ ६.१७॥
सुखस्थितस्य तस्याथ कदाचिच्छ्वशुरात्मजः।
तस्या मदनसुन्दर्या भ्राता तत्रागतोऽभवत्॥ ६.१८॥
स कृतप्रश्रयः सर्वैः स्वस्राश्लिष्याभिनन्दितः।
संबन्धिपृष्टकुशलो विश्रान्तश्च जगाद तान्॥ ६.१९॥
अहं मदनसुन्दर्या जामातुश्च निमन्त्रणे।
तातेन प्रेषितो यस्माद्देवीपूजोत्सवोऽस्ति नः॥ ६.२०॥
श्रद्धाय चैतत्तद्वाक्यं यथार्हैः पानभोजनैः।
ते संबन्ध्यादयः सर्वे तदहस्तमुपाचरन्॥ ६.२१॥
प्रातर्मदनसुन्दर्या स्वश्शुर्येण च तेन सः।
सहितो धवलः प्रायाद्गृहं तच्छ्वाशुरं प्रति॥ ६.२२॥
प्राप्य शोभावतीं तां च पुरीमात्मतृतीयकः।
ददर्श निकटं प्राप्य स गौर्यायतनं महत्॥ ६.२३॥
निजगाद च तौ भार्याश्वशुर्यौ श्रद्धया ततः।
एतमेतां भगवतीं पश्यामो देवतामिह॥ ६.२४॥
तच्छ्रुत्वा स श्वशुर्यस्तं निषेधं प्रत्यभाषत।
इयन्तो रिक्तहस्ताः किं पश्यामो देवतामिति॥ ६.२५॥
अहं तावद्व्रजाम्येको युवामत्रैव तिष्ठतम्।
इत्युक्त्वा धवलो द्रष्टुं देवीं तां स ततो ययौ॥ ६.२६॥
प्रविश्यायतनं तस्याः प्रणम्य च विभाव्य च।
तामष्टादशदोर्दण्डखण्डितोच्चण्डदानवाम्॥ ६.२७॥

पादपद्मतलाक्षिप्तमहिषासुरमर्दिनीम्।
स विधिप्रेरणोत्पन्नबुद्धिरेवमचिन्तयत्॥ ६.२८॥
जीवोपहारैर्विविधैरिमां देवीं जनोऽर्चति।
अहं तु सिद्ध्यै किं नैतां प्रीणाम्यात्मोपहारतः॥ ६.२९॥
इति ध्यात्वैव तद्गर्भगृहादादाय निर्जनात्।
खड्गं सांयात्रिकैः कैश्चिद्देव्याः प्राक्प्राभृतीकृतम्॥ ६.३०॥
बद्धा शिरोरुहैर्घण्टाशृङ्खलायां निजं शिरम्।
चिच्छेदैतेन खड्गेन तच्छिन्नं चापतद्भुवि॥ ६.३१॥
चिरं यावत्स नायाति तावद्गत्वा तमीक्षितुम्।
तत्रैव देवीभवने तच्छ्वशुर्यो विवेश सः॥ ६.३२॥
सोऽपि दृष्ट्वा तमुत्कृत्तमूर्धानं भगिनीपतिम्।
व्यामोहितस्तथैव स्वं शिरस्तेनासिनाच्छिनत्॥ ६.३३॥
सोऽपि यावच्च नायाति तावदुद्भ्रान्तमानसा।
तद्देवीभवनं सापि ययौ मदनसुन्दरी॥ ६.३४॥
प्रविश्य दृष्ट्वैव पतिं भ्रातरं च तथागतौ।
हा किमेतद्धतास्मीति विलपन्त्यपतद्भुवि॥ ६.३५॥
क्षणाच्चोत्थाय शोचन्ती तावकाण्डहतावुभौ।
किं ममाप्यधुनानेन जीवितेनेत्यचिन्तयत्॥ ६.३६॥
व्यजिज्ञपच्च देवीं तां देहत्यागोन्मुखी सती।
देवि सौभाग्यचारित्रविधानैकाधिदेवते॥ ६.३७॥
अध्यासितशरीरार्धे भर्तुर्माररिपोरपि।
अशेषललनालोकशरण्ये दुःखहारिणि॥ ६.३८॥
हृतावेकपदे कस्माद्भर्ता भ्राता च मे त्वया।
न युक्तमेतन्मयि ते नित्यभक्ता ह्यहं त्वयि॥ ६.३९॥
तन्मे श्रितायाः शरणं शृण्वेकं कृपणं वचः।
एतां तावत्त्यजाम्यत्र दौर्भाग्योपहतां तनुम्॥ ६.४०॥
जनिष्ये देवि भूयस्तु यत्र कुत्रापि जन्मनि।
तत्रैतावेव भूयास्तां द्वौ भर्तृभ्रातरौ मम॥ ६.४१॥
इति संस्तुत्य विज्ञप्य देवीं नत्वा च तां पुनः।
पाशं विरचयामास लतयाशोकपादपे॥ ६.४२॥

तत्रार्पयति यावच्च पाशे कण्ठं वितत्य सा।
तावत्तत्रोच्चचारैवं भारती गगनाङ्गणात्॥ ६.४३॥
मा कृथाः साहसं पुत्रि बालाया अपि तेऽमुना।
सत्त्वोत्कर्षेण तुष्टास्मि पाशमेतं परित्यज॥ ६.४४॥
संश्लेषय शिरः स्वं स्वं भर्तृभ्रातृकबन्धयोः।
उत्तिष्ठतां ते जीवन्तावेतौ द्वावपि मद्वरात्॥ ६.४५॥
एतच्छ्रुत्वैव संत्यज्य पाशं हर्षादुपेत्य सा।
अविभाव्यातिरभसाद्भ्रान्ता मदनसुन्दरी॥ ६.४६॥
बाला भर्तृशिरो भ्रातृदेहेन समयोजयत्।
भर्तृदेहेन च भ्रातृशिरो विधिनियोगतः॥ ६.४७॥
ततोऽक्षताङ्गौ जीवन्तावुभावुत्तस्थतुश्च तौ।
शिरोविनिमयाज्जातसंकरौ काययोर्मिथः॥ ६.४८॥
अथान्योन्योदितस्वस्वयथावृत्तान्ततोषिणः।
प्रणम्य देवीं शर्वानीं यथेष्टं ते ययुस्त्रयः॥ ६.४९॥
यान्ती च दृष्ट्वा स्वकृतं शिरोविनिमयं तयोः।
विग्ना किंकार्यतामूढा साभून्मदनसुन्दरी॥ ६.५०॥
तद्ब्रूहि राजन्को भर्ता तस्याः संकीर्णयोस्तयोः।
पुर्वोक्तः स्यात्स शापस्ते जानानो न ब्रवीषि चेत्॥ ६.५१॥
इत्याकर्ण्य कथाप्रश्नं राजा वेतालतस्ततः।
स त्रिविक्रमसेनोऽत्र तमेवं प्रत्यभाषत॥ ६.५२॥
यत्संस्थं तत्पतिशिरः सैष तस्याः पतिस्तयोः।
प्रधानं च शिरोऽङ्गेषु प्रत्यभिज्ञा च तद्गता॥ ६.५३॥
इत्युक्तवतो नृपतेस्तस्यांसात्पुनरतर्कितः स ययौ।
वेतालः स च राजा जगाम भूयस्तमानेतुम्॥ ६.५४॥

# सप्तमो वेतालः

ततो गत्वा पुनः प्राप्य वेतालं शिंशपातरोः।
स त्रिविक्रमसेनस्तं स्कन्धे जग्राह भूपतिः॥ ७.१॥
गृहीत्वा प्रस्थितं तं च वेतालः सोऽब्रवीत्पथि।
राजञ्श्रमविनोदार्थं कथामाख्यामि ते शृणु॥ ७.२॥
अस्तीह ताम्रलिप्तीति पुरी पूर्वाम्बुधेस्तटे।
चण्डसेनाभिधानश्च राजा तस्यामभूत्पुरि॥ ७.३॥
पराङ्मुखः परस्त्रीषु यो न सङ्ग्रामभूमिषु।
हर्ता च शत्रुलक्ष्मीणां न परद्रव्यसंपदाम्॥ ७.४॥
तस्यैकदा दाक्षिणात्यो राजपुत्रो जनप्रियः।
आययौ सत्त्वशीलाख्यः सिंहद्वारेऽत्र भूपतेः॥ ७.५॥
तत्र चात्मानमावेद्य नैर्धन्यात्तं नृपं प्रति।
कपटं पाटयामास राजपुत्रैः सहापरैः॥ ७.६॥
ततः कार्पटिको भूत्वा बह्वन्यब्दानि तत्र सः।
तस्थौ कुर्वन्सदा सेवान्नैव प्राप फलं नृपात्॥ ७.७॥
यदि राजान्वये जन्म निर्धनत्वं किमीदृशम्।
निर्धनत्वेऽपि किं धात्रा कृतेयं मे महेच्छता॥ ७.८॥
अयं हि सेवमानं मामेवं क्लिष्टपरिच्छदम्।
चिरं क्षुधावसीदन्तं राजा नाद्यापि वीक्षते॥ ७.९॥
इति यावच्च स ध्यायत्यत्र कार्पटिकस्ततः।
तावदाखेटकार्थं स निरगादेकदा नृपः॥ ७.१०॥
तस्मिन्कार्पटिके धावत्यग्रे लगुडवाहिनि।
जगाम चाश्वपादातयुतः सोऽथ मृगाटवीम्॥ ७.११॥
कृताखेटश्च तत्रारान्महान्तं मत्तसूकरम्।
अनुधावन्क्षणात्प्रापदतिदूरं वनान्तरम्॥ ७.१२॥

तत्र पर्णतृणच्छन्नमार्गे हारितसूकरः।
श्रान्तो महावने सोऽथ राजा दिङ्मोहमाययौ॥७.१३॥
एकः कार्पटिकश्चाथ स तं वाताश्वपृष्ठगम्।
प्रानानपेक्षोऽनुययौ पदातिः क्षुत्तृषार्दितः॥७.१४॥
तं च दृष्ट्वा तथाभूतमन्वायातं स भूपतिः।
सस्नेहमवदत्कच्चिद्वेत्सि मार्गं यथागतम्॥७.१५॥
तदाकर्ण्याञ्जलिं बद्ध्वा स तं कार्पटिकोऽभ्यधात्।
वेद्मि किं च क्षणं तावदिह विश्राम्यतु प्रभुः॥७.१६॥
द्युवधूमेखलामध्यमणिरेष हि संप्रति।
देदीप्यते स्फुरद्रश्मिशिखाजालोऽब्जिनीपतिः॥७.१७॥
एतच्छ्रुत्वा स राजा तं सोपरोधमभाषत।
तर्हि क्वापीह पानीयं भवता प्रेक्ष्यतामिति॥७.१८॥
तथेत्यारुह्य स ततस्तुङ्गं कार्पटिकस्तरुम्।
नदीं दृष्ट्वावरुह्याथ नृपं तत्र निनाय तम्॥७.१९॥
तद्वाहं च विपर्यानीकृतं कृतविवर्तनम्।
दत्ताम्बुशष्पकवलं विदधे विगतश्रमम्॥७.२०॥
कृतस्नानाय राज्ञे च प्रोन्मुच्य वसनाञ्चलात्।
प्रक्षाल्योपानयत्तस्मै हृद्यान्यामलकानि सः॥७.२१॥
एतानि कुत इत्येतं पृच्छन्तं स च भूपतिम्।
एवं व्यजिज्ञपज्जानुस्थितः सामलकाञ्जलिः॥७.२२॥
एतद्वृत्तिरहं नित्यं व्यतीतदशवत्सरः।
चराम्याराधयन्देवमनेकान्तमुनिव्रतम्॥७.२३॥
तच्छ्रुत्वा सत्यनामा त्वं सत्त्वशीलः किमुच्यते।
इत्युक्त्वा स कृपाक्रान्तो ह्रीतश्चाचिन्तयन्नृपः॥७.२४॥
धिङ्नृपान्क्लिष्टमक्लिष्टं ये भृत्येष न जानते।
धिक्क तं परिवारं यो न ज्ञापयति तांस्तथा॥७.२५॥
इति संचिन्त्य जग्राह स राजामलकद्वयम्।
हस्तात्कार्पटिकस्याथ कथंचिदनुबध्नतः॥७.२६॥
भुक्त्वा च तन्निपीयाम्बु विशश्रामात्र स क्षणम्।
जग्धामलकसंपीतजलकार्पटिकान्वितः॥७.२७॥

ततः सज्जीकृतं तेन वाहं कार्पटिकेन सः।
आरुह्याग्रेसरे तस्मिन्नेव मार्गप्रदर्शिनि॥ ७.२८॥
पश्चाद्वागमनारूढे हयस्याभ्यर्थितेऽप्यलम्।
ययौ स राजा स्वपुरिं पथि प्राप्तात्मसैनिकः॥ ७.२९॥
तत्र प्रख्याप्य तद्भक्तिं वसुभिर्विषयैश्च तम्।
अपूरयत्कार्पटिकं न चामन्यत निष्कृतिम्॥ ७.३०॥
ततः कृतार्थः पार्श्वेऽस्य चण्डसिंहस्य भूपतेः।
मुक्तकार्पटिकाचारः सत्त्वशीलः स तस्थिवान्॥ ७.३१॥
एकदा तेन राज्ञा च स सिंहलपतेः सुताम्।
याचितुं सिंहलद्वीपमात्मार्थं प्रेषितोऽभवत्॥ ७.३२॥
तत्राब्धिवर्त्मना गच्छन्नर्चिताभीष्टदेवतः।
आरुरोह प्रवहणं राजादिष्टैः सह द्विजैः॥ ७.३३॥
गते तस्मिन्प्रवहणे मध्यभागमशङ्कितम्।
उत्तस्थौ जलधेस्तस्माद्ध्वजो जनितविस्मयः॥ ७.३४॥
अभ्रंलिहाग्रः सुमहाञ्जाम्बूनदविनिर्मितः।
विचित्रवर्णविचलद्वैजयन्तीविराजितः॥ ७.३५॥
तत्कालं चात्र सहसा समुन्नम्य घनावली।
भृशं वर्षितुमारेभे ववौ तीव्रश्च मारुतः॥ ७.३६॥
तैर्वर्षवातैः स बलादाकृष्याधोरनैरिव।
आसज्यत ध्वजस्तम्भे तस्मिन्प्रवहणद्विपः॥ ७.३७॥
तावच्च स ध्वजस्तस्मिन्वारिधौ वीचिविप्लुते।
वहनेन समं तेन प्रावर्तत निमज्जितुम्॥ ७.३८॥
ततो द्विजास्ते तत्रस्थाश्चण्डसिंहं स्वभूपतिम्।
उद्दिश्योद्घोषयामासुरब्रह्मण्यं भयाकुलाः॥ ७.३९॥
तदाकर्ण्यासहिष्णुश्च स्वामिभक्तेरनुध्वजम्।
स सत्त्वशीलो निस्त्रिंशहस्तो बद्धोत्तरीयकः॥ ७.४०॥
आत्मानमक्षिपत्तत्र निरपेक्षो महोदधौ।
उदधेः कारणाशङ्की वीरः प्रतिविधित्सया॥ ७.४१॥
मग्ने च तस्मिन्वातोर्मिदूरोत्क्षिप्तमभज्यत।
वहनं तच्च तत्स्ताश्च निपेतुर्यादसां मुखे॥ ७.४२॥

स च मग्नोऽम्बुधौ तत्र सत्त्वशीलो निरीक्षते।
यावत्तावद्ददर्शात्र पुरीं दिव्यां न वारिधिम्॥ ७.४३ ॥
तस्मिन्मणिमयस्थम्भैर्भास्वरे हेममन्दिरे।
सद्रत्नबद्धसोपानवापीकोद्यानशोभिनि॥ ७.४४ ॥
नानामणिशिलाभित्तिरत्नचित्रोच्छ्रितध्वजम्।
कात्यायनीदेवगृहं मेरुप्रोन्नतमैक्षत॥ ७.४५ ॥
तत्र प्रणम्य देवीं तां स्तुत्याभ्यर्च्य तदग्रतः।
इन्द्रजालं किमेतत्स्यादित्याश्चर्यादुपाविशत्॥ ७.४६ ॥
तावच्च देव्यग्रगतप्रभामण्डलकान्तरात्।
अकस्मान्निरगात्कन्या दिव्योद्घाट्य कवाटकम्॥ ७.४७ ॥
इन्दी वराक्षी फुल्लाब्जवदना कुसुमस्मिता।
मृणालनालमृद्वङ्गी जङ्गमेव सरोजिनी॥ ७.४८ ॥
स्त्रीसहस्रपरीवारा देवीगर्भगृहं च सा।
विवेश सत्त्वशीलस्य हृदयं च ततः समम्॥ ७.४९ ॥
निरगात्कृतपूजा च देवीगर्भगृहात्ततः।
न पुनः सत्त्वशीलस्य हृदयात्सा कथं चन॥ ७.५० ॥
प्राविशत्सा च तत्रैव प्रभामण्डलकान्तरे।
सत्त्वशीलोऽप्यसौ तस्याः पश्चात्तत्र प्रविष्टवान्॥ ७.५१ ॥
प्रविश्य च ददर्शान्तरन्यदेवोत्तमं पुरम्।
संकेतोद्यानमिव यत्सर्वासां भोगसंपदाम्॥ ७.५२ ॥
तत्रान्तर्मणिपर्यङ्कनिषण्णां तां विलोक्य सः।
कन्यामुपेत्य तत्पार्श्वे सत्त्वशील उपाविशत्॥ ७.५३ ॥
आसीच्च तन्मुखासक्तलोचनो लिखितो यथा।
अङ्गैः सोत्कम्पपुलकैर्वदन्नालिङ्गनोत्कताम्॥ ७.५४ ॥
दृष्ट्वा च तं स्मराविष्टं चेटीनामत्र सा मुखम्।
अद्राक्षीत्ताश्च तत्कालमिङ्गितज्ञास्तमब्रुवन्॥ ७.५५ ॥
अतिथिस्त्वमिह प्राप्तस्तदस्मत्स्वामिनीकृतम्।
भजस्वातिथ्यमुत्तिष्ठ स्नाहि भुङ्क्स्व ततः परम्॥ ७.५६ ॥
तच्छ्रुत्वा सोऽवलम्ब्याशां खतमप्युत्थितस्ततः।
ययौ प्रदर्शितां ताभिरेकामुद्यानवापिकाम्॥ ७.५७ ॥

तस्यां निमग्नश्चोत्तस्थौ ताम्रलिप्त्यां स तत्क्षणात्।
चण्डसिंहनृपोद्यानवापीमध्यात्ससंभ्रमः ॥ ७.५८ ॥
तत्र प्राप्तमकस्माच्च विक्ष्यात्मानमचिन्तयत्।
अहो किमेतत्कोद्यानमिदं दिव्यं क्व तत्पुरम् ॥ ७.५९ ॥
तत्रामृतासारसमं क्व तत्तस्याश्च दर्शनम्।
क्व चानन्तरमेवेदं तद्विश्लेषमहाविषम् ॥ ७.६० ॥
स्वप्नश्च नायं सुस्पष्टो विनिद्रोऽनुभवो हि मे।
ध्रुवं पातालकन्याभिस्ताभिर्मूढोऽस्मि वञ्चितः ॥ ७.६१ ॥
इति ध्यायन्विना तां स कन्यामुन्मादवानिव।
उद्याने तत्र बभ्राम कामार्तो विललाप च ॥ ७.६२ ॥
तदवस्थं च तं दृष्ट्वा पिशङ्गैः पुष्परेणुभिः।
वातोद्धूतैः परीताङ्गं विप्रयोगानलैरिव ॥ ७.६३ ॥
उद्यानपाला गत्वैव चण्डसिंहमहीभृतम्।
व्यजिज्ञपन्स चोद्भ्रान्तः स्वयमेत्य ददर्श तम् ॥ ७.६४ ॥
सान्त्वयित्वा च पप्रच्छ किमिदं ब्रूहि नः सखे।
क्व प्रस्थितस्त्वं क्व प्राप्तः क्वास्तः क्व पतितः शरः ॥ ७.६५ ॥
तच्छ्रुत्वा स स्ववृत्तान्तं तस्मै सर्वं शशंस तम्।
सत्त्वशीलो नृपतये सोऽप्यथैवमचिन्तयत् ॥ ७.६६ ॥
हन्त वीरोऽपि मत्पुण्यैः कामेनैषो विडम्बितः।
आनृण्यं गन्तुमेतस्य लब्धो ह्यवसरो मया ॥ ७.६७ ॥
इत्यन्तश्चिन्तयित्वा स वीरो राजा जगाद तम्।
तर्हि मुञ्च मुधा शोकमहं त्वां प्रापयामि ताम् ॥ ७.६८ ॥
नीत्वा तेनैव मार्गेण प्रियामसुरकन्यकाम्।
इति चाश्वासयामास तं स स्नानादिना नृपः ॥ ७.६९ ॥
अन्येद्युर्मन्त्रिविन्यस्तराज्यस्तेन समं च सः।
प्रायात्प्रवहणारूढस्तद्दर्शितपथोऽम्बुधिम् ॥ ७.७० ॥
प्राप्य तन्मध्यभागं च दृष्ट्वा तं प्राग्वदुत्थितम्।
सपताकं ध्वजं सत्त्वशीलस्तं नृपमभ्यधात् ॥ ७.७१ ॥
सोऽयमभ्युत्थितो दिव्यप्रभावोऽत्र महाध्वजः।
मयि मग्नेऽत्र मङ्क्तव्यं देवेनैतमनु ध्वजम् ॥ ७.७२ ॥

इत्युक्त्वा निकटं प्राप्य ध्वजस्यास्य निमज्जतः।
मार्गे स सत्त्वशीलोऽसौ पूर्वमात्मानमक्षिपत्॥ ७.७३ ॥
ततो राजापि चिक्षेप तत्रात्मानं तथैव सः।
अन्तो मग्नौ च तौ क्षिप्रं तद्दिव्यं प्रापतुः पुरम्॥ ७.७४॥
तत्र दृष्ट्वा स साश्चर्यो राजा देवीं प्रणम्य ताम्।
पार्वतीं सत्त्वशीलेन सहितः समुपाविशत्॥ ७.७५॥
तावच्च निरगात्तत्र सा सखीजनसंगता।
रूपिनीव प्रभा कन्या प्रभामण्डलकात्ततः॥ ७.७६ ॥
इयं सा सुमुखीत्युक्ते सत्त्वशीलेन तां नृपः।
दृष्ट्वा युक्तमभिष्वङ्गं तस्य तस्याममन्यत॥ ७.७७॥
सापि तं वीक्ष्य राजानं शुभशारीरलक्षणम्।
पुरुषातिशयोऽपूर्वः कोऽयं स्यादित्यचिन्तयत्॥ ७.७८॥
विवेश चाम्बिकाधाम पूजायै सा नृपोऽपि सः।
जगामोद्यानमादाय सत्त्वशीलमवज्ञया॥ ७.७९॥
क्षणाच्च कृतपूजा सा निरगाद्दैत्यकन्यका।
याचित्वा सत्पतिप्राप्तिं देव्या गर्भगृहान्तरात्॥ ७.८०॥
निर्गत्य सा जगादैकां सखीं सखि गवेष्यताम्।
योऽसाविह मया दृष्टो महात्मा क्व स तिष्ठति॥ ७.८१ ॥
आतिथ्यं गृह्यतामेत्य प्रसादः क्रियतां त्वया।
इति चैषोऽर्थ्यतां पूज्यः पुमान्कोऽप्युत्तमो ह्यसौ॥ ७.८२॥
एवं सखी तयोक्ता सा विचित्योद्यानवर्तिने।
स्वस्वामिनीनिदेशं तं प्रह्वा तस्मै न्यवेदयत्॥ ७.८३॥
तच्छ्रुत्वा स नृपो वीरः सावहेलमुवाच ताम्।
एषैवातिथ्यमस्माकमन्यत्किमुपयुज्यते॥ ७.८४॥
एतच्छ्रुत्वा तया गत्वा सख्या सा श्राविता तदा।
मेने मान्यमुदारं तं सर्वथा दैत्यकन्यका॥ ७.८५॥
ततश्चाकृष्यमानेव धैर्यपाशेन तेन सा।
नृपेण मानुषायोग्येऽप्यातिथ्ये निःस्पृहात्मना॥ ७.८६ ॥
पत्यर्थं पार्वतीसेवापरिपाकसमर्पितम्।
मत्वा तत्स्वयमुद्यानं विवेशासुरपुत्रिका॥ ७.८७॥

विचित्रशकुनालापैर्वाताञ्चितलताभुजैः।
विकीर्णकुसुमैराराग्नन्द्यमानेव पादपैः ॥ ७.८८ ॥
उपगम्य च सा तत्र यथावत्प्रश्रयानता।
आतिथ्यग्रहणार्थं तं प्रार्थयामास पार्थिवम् ॥ ७.८९ ॥
ततः स सत्त्वशीलं तमुद्दिश्योवाच तां नृपः।
अनेन कथितां देवीमिहाहं द्रष्टुमागतः ॥ ७.९० ॥
गौरीं ध्वजपथप्राप्यपरमाद्भुतकेतनाम्।
सा दृष्टा तदनु त्वं च कान्यातिथ्यार्थितात्र नः ॥ ७.९१ ॥
तच्छ्रुत्वा साब्रवीत्कन्या कौतुकात्तर्हि वीक्षितुम्।
आगम्यतां द्वितीयं मे पुरं त्रिजगदद्भुताम् ॥ ७.९२ ॥
एवमुक्तवतीं तां च स विहस्य नृपोऽब्रवीत्।
तदप्यनेनैवोक्तं मे यत्र सा स्नानवापिका ॥ ७.९३ ॥
ततः सा कन्यकावादीद्देव मा स्मैवमादिश।
न विडम्बनशीलाहं का वा पूज्ये विडम्बना ॥ ७.९४ ॥
अहं हि सत्त्वोत्कर्षेण युष्माकं किंकरीकृता।
तन्मम प्रार्थनाभङ्गं नैवैवं कर्तुमर्हथ ॥ ७.९५ ॥
एतच्छ्रुत्वा तथेत्युक्त्वा सत्त्वशीलसखः स तत्।
प्रभामण्डलकोपान्तं ययौ राजा तया सह ॥ ७.९६ ॥
अपावृतकवाटे च तस्मिन्नन्तस्तथैव सः।
प्रवेशितो ददर्शास्यास्तद्दिव्यमपरं पुरम् ॥ ७.९७ ॥
नित्य संनद्धसर्वर्तु सदापुष्पफलद्रुमम्।
मेरुपृष्ठमिवाशेषं निर्मितं रत्नकाञ्चनैः ॥ ७.९८ ॥
रत्नासने महार्हे तं राजानमुपवेश्य सा।
यथोचितोपनीतार्घ्या दैत्यराजसुताब्रवीत् ॥ ७.९९ ॥
कन्याहमसुरेन्द्रस्य कालनेमेर्महात्मनः।
चक्रायुधेन च स मे स्वर्गतिं प्रापितः पिता ॥ ७.१०० ॥
विश्वकर्मकृतं चेदं पैतृकं मे पुरद्वयम्।
न जरात्र न मृत्युश्च बाधते सर्वकामदे ॥ ७.१०१ ॥
इदानीं च पिता त्वं मे सपुराहं वशे तव।
इत्यर्पितात्मसर्वस्वां तामुवाच स भूपतिः ॥ ७.१०२ ॥

यद्येवं तत्सुते ह्यस्मै मया दत्तास्यनिन्दिते।
सत्त्वशीलाय वीराय सुहृदे बान्धवाय च॥७.१०३॥
एवं देवीप्रसादेन मूर्तेनेव नृपेण सा।
उक्ता गुणज्ञा विनता तत्तथेत्यन्वमन्यत॥७.१०४॥
ततः कृतार्थं तं तस्याः कृतपाणिग्रहं नृपः।
दत्तासुरपुरैश्वर्यं सत्त्वशीलमुवाच सः॥७.१०५॥
बुक्तयोरामलकयोस्तयोरेकं मया तव।
संशोधितमसंशुद्धाद्दणी तेऽहं द्वितीयतः॥७.१०६॥
इति प्रणतमुक्त्वा तं दैत्यपुत्रीं जगाद ताम्।
मार्गो मे दर्श्यतां येन स्वपुरीं प्राप्नुयामिति॥७.१०७॥
ततोऽपराजितं नाम खड्गं भक्ष्यं फलं च सा।
एकं जरामृत्युहरं तस्मै दैत्यसुता ददौ॥७.१०८॥
ताभ्यां युक्तस्तयोक्तायां वाप्यं मग्नः स्वदेशतः।
उत्थाय सर्वसंसिद्धकामोऽभूत्स क्रमान्नृपः॥७.१०९॥
सत्त्वशीलोऽपि दैत्यस्त्रीपुरराज्यं शशास सः।
तद्ब्रूहि कोऽब्धिपतने द्वयोः सत्त्वाधिकोऽनयोः॥७.११०॥
इति श्रुत्वा तथा प्रश्नं वेतालाच्छपभीतितः।
स त्रिविक्रमसेनस्तं भूपतिः प्रत्यभाषत॥७.१११॥
एतयोः सत्त्वशीलोऽत्र स मे सत्त्वाधिको मतः।
स ह्यविज्ञाततत्त्वार्थो निरास्थः पतितोऽम्बुधौ॥७.११२॥
राजा तु तत्त्वं विज्ञाय विवेशाम्भोधिमास्थया।
दैत्यकन्यां च नावञ्छदसाध्या स्पृहयेति सः॥७.११३॥
इति तस्याकर्ण्य वचो निरस्तमौनस्य भूपतेः स्कन्धात्।
स जगाम पूर्ववत्तं वेतालः शिंशपातरुं स्वपदम्॥७.११४॥
राजापि तथैव स तं पुनरप्यानेतुमनुजगाम जवात्।
प्रारब्धे ह्यसमाप्ते कार्ये शिथिलीभवन्ति किं सुधियः॥७.११५॥

# अष्टमो वेतालः

गत्वा तां शिंशपां भूयो वेतालं प्राप्य भूमिपः।
तं त्रिविक्रमसेनोऽत्र स्कन्धे कृत्वोच्चचाल सः॥ ८.१॥
प्रयान्तं स पुनस्तं च वेतालः स्कन्धतोऽब्रवीत्।
श्रमविस्मृतये राजन्मत्तः प्रश्नमिमं शृणु॥ ८.२॥
अङ्गदेशेऽग्रहारोऽस्ति महान्वृक्षघटाभिधः।
विष्णुस्वामीति तत्रासीद्द्विजो यज्वा महाधनः॥ ८.३॥
तस्य च स्वानुरूपायां पत्न्यां जाताः क्रमात्त्रयः।
बभूवुस्तरुणाः पुत्रा दिव्यवैदग्ध्यशालिनः॥ ८.४॥
ते पित्रा प्रेषितास्तेन कूर्महेतोः कदाचन।
प्रारब्धयज्ञेन ययुस्ते त्रयो भ्रातरोऽम्बुधिम्॥ ८.५॥
प्राप्य कूर्मं ततो ज्यायान्कनिष्ठौ तावभाषत।
गृह्णातु युवयोरेकः कूर्मं क्रतुकृते पितुः॥ ८.६॥
अहमेतं न शक्नोमि ग्रहीतुं विस्रपिच्छलम्।
इत्युक्तवन्तं तं ज्येष्ठं कनिष्ठौ ताववोचताम्॥ ८.७॥
तवात्र विचिकित्सा चेन्नावयोरपि सा कथम्।
तच्छ्रुत्वा सोऽब्रवीज्ज्येष्ठो गृह्णीतं गच्छतं युवाम्॥ ८.८॥
पितुर्यज्ञक्रियालोपो भवेद्युष्मत्कृतोऽन्यथा।
ततो नरकपातः स्याद्युवयोस्तस्य च ध्रुवम्॥ ८.९॥
इत्युक्तावनुजौ तेन तौ विहस्य तमूचतुः।
धर्मं वेत्स्यावयोरेव समानमपि नात्मनः॥ ८.१०॥
ततो ज्येष्ठोऽब्रवीत्किं मे जानीथो नैव चङ्गताम्।
अहं भोजनचङ्गोऽस्मि नार्हः स्प्रष्टुं जुगुप्सितम्॥ ८.११॥
एतत्तस्य वचः श्रुत्वा भ्रातरं मध्यमोऽब्रवीत्।
अहं तर्ह्यधिकश्चङ्गो नारीचङ्गो विचक्षणः॥ ८.१२॥

मध्यमेनैवमुक्ते तु ज्यायान्पुन उवाच सः।
कूर्मं गृह्णातु तद्व्येष कनीयानावयोरिति॥८.१३॥
ततः स भ्रुकुटिं कृत्वा कनीयानप्युवाच तौ।
हे मूर्खौ तूलिकाचङ्गश्चङ्गोऽहं हि विशेषतः॥८.१४॥
एवं ते कलहासक्तास्त्रयोऽपि भ्रातरो मिथः।
निर्णयायाभिमानैकग्रस्ताः कूर्मं विहाय तम्॥८.१५॥
राज्ञः प्रसेनजिन्नाम्नस्तत्प्रदेशभुवोऽन्तिकम्।
नगरं सहसा जग्मुर्विटङ्कपुरनामकम्॥८.१६॥
तत्र प्रतीहारमुखेनावेद्यान्तः प्रविश्य च।
नृपं विज्ञापयामासुः स्ववृत्तान्तं तथैव ते॥८.१७॥
तिष्ठतेहैव यावद्वः परीक्षिष्ये क्रमादहम्।
इत्युक्तस्तेन राज्ञा च तस्थुस्तत्र तथेति ते॥८.१८॥
स्वाहारकाले चानाय्य तेभ्यः सोऽग्रासनं नृपः।
राजार्हं दापयामास षड्रसं स्वादुभोजनम्॥८.१९॥
भुञ्जानेषु च सर्वेषु तदैको बुभुजे न सः।
विप्रो भोजनचङ्गोऽत्र जुगुप्साकूणिताननः॥८.२०॥
कथं न भोजनं भुङ्क्षे ब्रह्मन्स्वादु सुगन्ध्यपि।
इति राज्ञा स्वयं पृष्टः शनैर्विप्रो जगाद सः॥८.२१॥
शवधूमदुरामोदः शालिभक्तेऽत्र विद्यते।
तेन नाहमिदं भोक्तुमुत्सहे स्वाद्वपि प्रभो॥८.२२॥
इत्युक्ते तेन सर्वेऽपि तत्राघ्राय नृपाज्ञया।
ऊचुः कलमशाल्यन्नमदोषं तत्सुगन्धि च॥८.२३॥
स तु भोजनचङ्गस्तन्नाश्नात्पिहितनासिकः।
ततः स राजा संचिन्त्य यावदन्विष्यति क्रमात्॥८.२४॥
तावन्नियोगिजनतस्तदन्नं बुबुधे तथा।
ग्रामश्मशाननिकटक्षेत्रसंभवशालिजम्॥८.२५॥
ततोऽतिविस्मितस्तुष्टः स राजा तमभाषत।
सत्यं भोजनचङ्गस्त्वं तदन्यद्भुज्यतामिति॥८.२६॥
कृताहारश्च स नृपो विप्रान्वासगृहेषु तान्।
विसृज्यानाययामास स्वमेकां गणिकोत्तमाम्॥८.२७॥

तां च तस्मै द्वितीयस्मै प्राहिणोत्कृतमण्डनाम्।
विप्राय नारिचङ्गाय सायं सर्वाङ्गसुन्दरीम्॥ ८.२८॥
सा च वासगृहं तस्य राजभृत्यान्विता ययौ।
राकानिशेव पुर्णेन्दुमुखी कंदर्पदीपिनी॥ ८.२९॥
प्रविष्टायां च तस्यां स प्रभाभासितवेश्मनि।
उत्पन्नमूर्च्छः संरुद्धनासाग्रो वामपाणिना॥ ८.३०॥
नारीचङ्गोऽब्रवीद्राजभृत्यान्निष्कास्यतामिति।
न चेन्मृतोऽहं निर्याति गन्धोऽस्याश्छागलो यतः॥ ८.३१॥
इत्युक्तास्तेन निन्युस्ते विग्नां तां राजपूरुषाः।
राज्ञोऽन्तिकं वारवधूं वृत्तान्तं जगदुश्च तम्॥ ८.३२॥
राजाप्यानाय्य तत्कालं नारीचङ्गमुवाच तम्।
येयं श्रीखण्डकर्पूरकालागुरुमदोत्तमैः॥ ८.३३॥
कृतप्रसाधना दिक्षु प्रसरच्चारुसौरभा।
तस्या वारविलासिन्या गन्धः स्याच्छागलः कुतः॥ ८.३४॥
इत्युक्तोऽपि स राज्ञा तन्नारीचङ्गस्तदा न यत्।
प्रतिपेदे तदा राजा विचारपतितोऽभवत्॥ ८.३५॥
पृच्छंश्च युक्त्या बुबुधे तामजक्षीरवर्धिताम्।
तन्मुखादेव बालत्वे मातृधात्रीवियोगतः॥ ८.३६॥
ततोऽतिविस्मितस्तस्य नारीचङ्गस्य चङ्गताम्।
प्रशंसन्नृपतिस्तस्मै तृतीयाय द्विजन्मने॥ ८.३७॥
तद्रसात्तूलिकाचङ्गायाशु शय्यामदापयत्।
पर्यङ्कोपरि विन्यस्तसप्तसंख्याकतूलिकाम्॥ ८.३८॥
तस्यां च तूलिकाचङ्गो महार्हे वासवेस्मनि।
सुष्वाप धौतसुश्लक्ष्णपटप्रच्छदवाससि॥ ८.३९॥
यामार्ध एव च गते स रात्रौ शयनात्ततः।
उत्तस्थौ पाण्यवष्टब्धपार्श्वः क्रन्दन्व्यथार्दितः॥ ८.४०॥
ददृशे तस्य पार्श्वे च तत्रत्यै राजपूरुषैः।
गाढलग्नस्य बालस्य मुद्रेव कुटिलारुणा॥ ८.४१॥
गत्वा च तैस्तदाख्यातं राज्ञे राजाप्युवाच तान्।
तूलिकानां तले किंचिन्मा स्यात्तद्वीक्ष्यतामिति॥ ८.४२॥

गत्वेक्षन्ते च ते यावदेकैकं तूलिकातलम्।
तावत्सर्वतलादापुर्वालं पर्यङ्कपृष्ठतः॥८.४३॥
नीत्वा चादर्शयन्राज्ञे सोऽप्यानीतस्य वीक्ष्य तत्।
तद्रूपं तूलिकाचङ्गस्याङ्गं राजा विसिस्मिये॥८.४४॥
सप्तभ्यस्तूलिकाभ्योऽस्य वालो लग्नस्तनौ खतम्।
इति चित्रीयमाणस्तां राजा रात्रिं निनाय सः॥८.४५॥
प्रातश्चाद्भुतवैदग्ध्यसौकुमार्या अमी इति।
तेभ्यस्त्रिभ्योऽपि चङ्गेभ्यो हेमलक्षत्रयं ददौ॥८.४६॥
ततस्ते सुखितास्तत्र तस्थुर्विस्मृतकच्छपाः।
पितुर्विघ्नितयज्ञार्थफलोपार्जितपातकाः॥८.४७॥
इत्याख्याय कथाद्भुतमंसनिषण्णः पुनः स वेतालः।
पप्रच्छ तं त्रिविक्रमसेनं पृथ्वीपतिं प्रश्नम्॥८.४८॥
राजन्विचिन्त्य शापं पूर्वोक्तं ब्रूहि मे त्वमेतेषाम्।
भोजननारीशय्याचङ्गानां कोऽधिकश्चङ्गः॥८.४९॥
तच्छ्रुत्वैव स धीमान्वेतालं प्रत्युवाच तं नृपतिः।
अहमेषां निःकैतवमधिकं जानामि तूलिकाचङ्गम्॥८.५०॥
यस्याङ्गे प्रत्यक्षं वालप्रतिबिम्बमुद्गतं दृष्टम्।
इतराभ्यां हि भवेत्तत्पूर्वं ज्ञात्वन्यतोऽवगतम्॥८.५१॥
इति तस्योक्तवतोऽंसाद्वेतालो भूपतेर्ययौ प्राग्वत्।
सोऽपि तथैव च राजा तमन्वयासीदनिर्विण्णः॥८.५२॥

# नवमो वेतालः

ततो गत्वा पुनस्तस्माच्छिंशपापादपान्नृपः।
स त्रिविक्रमसेनस्तं स्कन्धे वेतालमग्रहीत्॥ ९.१ ॥
प्रस्थितश्च ततस्तेन वेतालेनाभ्यधायि सः।
राजन्क राज्यं क्वैतस्मिञ्श्मशाने भ्रमणं निशि॥ ९.२ ॥
किमेतन्नेक्षसे भूतसंकुलं रात्रिभीषणम्।
चिताधूमैरिव ध्वान्तैर्निरुद्धं पितृकाननम्॥ ९.३ ॥
कष्टं कीदृग्ग्रहोऽयं ते भिक्षोस्तस्यानुरोधतः।
तदिदं शृणु तावन्मे प्रश्नं मार्गविनोदनम्॥ ९.४ ॥
अवन्तिष्वस्ति नगरी युगादौ देवनिर्मिता।
शैवी तनुरिवोद्दामभोगिभूतिविभूषिता॥ ९.५ ॥
पद्मावती भोगवती या हिरण्यवतीति च।
कृतादिषु त्रिषु ख्याता कलावुज्जयिनीति च॥ ९.६ ॥
तस्यां च वीरदेवाख्यो राजाभूद्भूभृतां वरः।
तस्य पद्मरतिर्नाम महादेवी बभूव च॥ ९.७ ॥
सोऽथ राजा तया साकं गत्वा मन्दाकिनीतटे।
हरमाराधयामास तपसा पुत्रकाम्यया॥ ९.८ ॥
चिरं तपःस्थितश्चात्र परितुष्टेश्वरोदिताम्।
कृतस्नानार्चनविधिः शुश्रावेमां गिरं दिवः॥ ९.९ ॥
राजन्नुत्पत्स्यते पुत्रः शूरस्तव कुलोद्भवः।
कन्या चानन्यसामान्यलावण्यन्यक्कृताप्सराः॥ ९.१० ॥
श्रुत्वैतां नाभसीं वाणीं सिद्धाभीष्टः स भूपतिः।
वीरदेवः स्वनगरीमाययौ महिषीसखः॥ ९.११ ॥
तत्रास्य शूरदेवाख्ये जाते प्रथममात्मजे।
तस्यां पद्मरतौ देव्यां क्रमादजनि कन्यका॥ ९.१२ ॥

अनङ्गस्यापि रूपेण रतिमुत्पादयेदियम्।
इत्यनङ्गरतिर्नाम्ना पित्रा तेन व्यधायि सा॥९.१३॥
वृद्धिं गतायास्तस्याश्च स पिता सदृशं वरम्।
प्रेप्सुरानाययत्पृथ्व्यां पटेषु लिखिथान्नृपान्॥९.१४॥
तेष्वेकोऽपि न यत्तस्य तत्तुल्यः प्रत्यभासत।
तेन राजा स वात्सल्यात्तां सुतां प्रत्यभाषत॥९.१५॥
अहं तावन्न पश्यामि सदृशं पुत्रि ते वरम्।
तत्कुरुष्व नृपान्सर्वान्मेलयित्वा स्वयंवरम्॥९.१६॥
एतत्पितृवचः श्रुत्वा राजपुत्री जगाद सा।
तात स्वयंवरं कर्तुं ह्रेपणान्नाहमुत्सहे॥९.१७॥
किं त्वेकं वेत्ति योऽपूर्वं विज्ञानं स्वाकृतिर्युवा।
तस्मै त्वयाहं दातव्या नार्थोऽन्येनाधिकेन मे॥९.१८॥
इत्यनङ्गरतेस्तस्याः श्रुत्वा स्वदुहितुर्वचः।
तादृशं तद्वरं यावदन्विष्यति स भूपतिः॥९.१९॥
तावत्तल्लोकतो बुद्धा चत्वारस्तमुपाययुः।
वीरा विज्ञानिनो भव्याः पुरुषा दक्षिणापथात्॥९.२०॥
ते राज्ञा पूजितास्तस्मै स्वं स्वं विज्ञानमेकशः।
शशंसुः संनिधौ तस्या राजपुत्र्यास्तदर्थिनः॥९.२१॥
एको जगाद शूद्रोऽहमाख्यया पञ्चपट्टिकः।
पञ्चाग्र्यवस्त्रयुग्मानि करोम्येकोऽहमन्वहम्॥९.२२॥
तेभ्य एकं प्रयच्छामि देवायैकं द्विजन्मने।
एकं च परिगृह्णामि वाससोरात्मनः कृते॥९.२३॥
एकं ददामि भार्यायै यदि सा भवतीह मे।
एकं विक्रीय चाहारपानादि विदधाम्यहम्॥९.२४॥
एवं विज्ञानिनेऽनङ्गरतिर्मे दीयतामिति।
इत्येकेनोदिते तेन द्वितीयः पुरुषोऽब्रवीत्॥९.२५॥
भाषाज्ञो नाम वैश्योऽहं सर्वेषां मृगपक्षिणाम्।
रुतं वेद्मि तदेषा मे राजपुत्री प्रदीयताम्॥९.२६॥
एवमुक्ते द्वितीयेन तृतीयः प्रोक्तवांस्ततः।
अहं खड्गधरो नाम दोःशाली क्षत्रियो नृप॥९.२७॥

न खड्गविद्याविज्ञाने प्रतिमल्लोऽस्ति मे क्षितौ।
तदेषा तनया राजंस्त्वया मह्यं वितीर्यताम्॥९.२८॥
इत्युक्ते तु तृतीयेन चतुर्थ इदमभ्यधात्।
विप्रोऽहं जीवदत्ताख्यो विज्ञानं च ममेदृशम्॥९.२९॥
जन्तूं मृतानप्यानीय दर्शयाम्याशु जीवतः।
तद्वीरचर्यासिद्धं मां पतिमेषा प्रपद्यताम्॥९.३०॥
एवं वक्तृन्स तान्पश्यन्दिव्यवेषाकृतीन्नृपः।
वीरदेवः सुतायुक्तो दोलारूढ इवाभवत्॥९.३१॥
इत्याख्याय कथामेतां वेतालः पृष्टवान्नृपम्।
स त्रिविक्रमसेनं तं दत्तपूर्वोक्तशापभीः॥९.३२॥
तद्भवान्वक्तु तावन्मे कस्मै देया विशाम्पते।
तेषां चतुर्णां मध्यात्सा कन्यानङ्गरतिर्भवेत्॥९.३३॥
एतच्छ्रुत्वा स राजा तं वेतालं प्रत्यभाषत।
मौनं त्याजयति प्रायः कालक्षेपाय मां भवान्॥९.३४॥
अन्यथा गहनः कोऽयं प्रश्नो योगेश्वरोच्यताम्।
शूद्राय हि कुविन्दाय क्षत्रिया दीयते कथम्॥९.३५॥
वैश्यायापि कथं देया क्षत्रिया यच्च तद्गतम्।
मृगादिभाषाविज्ञानं कार्ये तत्कोपयुज्यते॥९.३६॥
योऽपि विप्रस्तृतीयोऽत्र तेनापि पतितेन किम्।
स्वकर्मप्रच्युतेनेन्द्रजालिना वीरमानिना॥९.३७॥
तस्मात्तस्मै क्षत्रियाय चतुर्थाय समाय सा।
देया खड्गधरायैव स्वविद्यावीर्यशालिने॥९.३८॥
एतत्तस्य वचो निशम्य नृपतेरंसस्थलात्पूर्वव-
द्वेतालः स जगाम योगबलतः स्वस्थानमेवाशु तत्।
भूपालोऽपि स तं तथैव पुनरप्यानेतुमन्वग्ययया-
वुत्साहैकघने हि वीरहृदये नाप्नोति खेदोऽन्तरम्॥९.३९॥

# दशमो वेतालः

स त्रिविक्रमसेनोऽथ गत्वा तं शिंशपातरोः।
राजा जग्राह वेतालं पुनरंसे चचाल च॥ १०.१॥
प्रयान्तं च तमाह स्म वेतालः सोऽंसपृष्ठगः।
श्रान्तोऽसि राजंस्तदिमां शृणु श्रमहरां कथाम्॥ १०.२॥
अभूत्सकलभूपालमस्तकन्यस्तशासनः।
वीरबाहुरिति ख्यातो नाम्ना पार्थिवसत्तमः॥ १०.३॥
तस्यानङ्गपुरं नाम बभूव नगरोत्तमम्।
तत्रासीदर्थदत्ताख्यः सार्थवाहो महाधनः॥ १०.४॥
तस्यासीद्धनदत्ताख्यज्येष्ठपुत्रकनीयसी।
सुता मदनसेनेति कन्यारत्नं वणिक्पतेः॥ १०.५॥
तामेकदा निजोद्याने क्रीडन्तीं ससखीजनाम्।
ददर्श धर्मदत्ताख्यो भ्रातृमित्रं वणिक्सुतः॥ १०.६॥
स तामालोक्य लावण्यरसनिर्भरनिर्झराम्।
आलक्ष्य कुचकुम्भाग्रां वलित्रयतरङ्गिताम्॥ १०.७॥
यौवनद्विरदस्येव क्रीडामज्जनवापिकाम्।
सद्योऽभूत्स्मरबाणौघसंतापहृतचेतनः॥ १०.८॥
अहो धाराधिरूढेन रूपेण द्योतितामुना।
इयं मे मानसं भेत्तुं भल्ली मारेण निर्मिता॥ १०.९॥
इत्यादि यावद्ध्यायन्स निर्वर्णयति तां चिरम्।
तावत्तस्यातिचक्राम चक्राह्वस्येव वासरः॥ १०.१०॥
ततो मदनसेना सा विवेश स्वगृहान्तरम्।
चित्तं च धर्मदत्तस्य तदनालोकनव्यथा॥ १०.११॥
तददर्शनदुःखाग्निसंतापेनेव च ज्वलन्।
लोहितो निपपाताशु भास्वानप्यपराम्बुधौ॥ १०.१२॥

तां विज्ञायैव सुमुखीं नक्तमभ्यन्तरे गताम्।
उदियाय शनैश्चन्द्रस्तन्मुखाब्जविनिर्जितः॥ १०.१३॥
तावद्गत्वा गृहं तां स धर्मदत्तोऽनुचिन्तयन्।
तस्थौ निपत्य शयने चन्द्रपादाहतो लुठन्॥ १०.१४॥
यत्नेन पृच्छ्यमानोऽपि सखिभिर्बन्धुभिस्तथा।
न किंचित्कथयामास स्मरग्रहविमोहितः॥ १०.१५॥
निशि कृच्छ्राच्च संप्राप्तनिद्रः स्वप्ने तथैव ताम्।
पश्यन्ननुनयन्कान्तां किं किं चक्रे न सोत्सुकः॥ १०.१६॥
प्रातः प्रबुद्धो गत्वा च ददर्शैकाकिनीं रहः।
सखीं प्रतीक्षमानां तां तत्रोद्यानस्थितां पुनः॥ १०.१७॥
उपेत्य च परिष्वङ्गलालसः प्रेमपेशलैः।
तामुपच्छन्दयामास वचोभिश्चरणानतः॥ १०.१८॥
कन्याहं परदाराश्च न तवास्मीह संप्रतम्।
पित्रा समुद्रदत्ताय दत्ताहं वणिजे यतः॥ १०.१९॥
दिनैः कतिपयैरेव विवाहो भविता च मे।
तद्गच्छ तूष्णीं मा कश्चित्पश्येद्दोषो भवेत्ततः॥ १०.२०॥
इत्युक्तः स तयात्यर्थं धर्मदत्तो जगाद ताम्।
यदस्तु मे न जीवेयं विना हि भवतीमहम्॥ १०.२१॥
तच्छ्रुत्वा सा वणिक्कन्या बलात्कारभयाकुला।
तमुवाच विवाहो मे तावत्संपद्यतामिह॥ १०.२२॥
कन्यादानफलं तातः प्राप्नोतु चिरकाङ्क्षितम्।
ततोऽहं त्वामुपैष्यामि निश्चितं प्रणयार्जिता॥ १०.२३॥
श्रुत्वैतत्सोऽब्रवीन्नेष्टा ह्यन्यपूर्वा मम प्रिया।
परभुक्ते हि कमले किमलेर्जायते रतिः॥ १०.२४॥
इत्युक्ता तेन सावादीत्कृतोद्वाहैव तर्ह्यहम्।
पूर्वं त्वामुपयास्यामि ततोऽभ्येष्यामि तं पतिम्॥ १०.२५॥
एवमुक्तवतीं तस्मिन्नोज्झति प्रत्ययं विना।
वणिक्पुत्रे सशपथं सत्यवाचं बबन्ध सा॥ १०.२६॥
ततस्तेनोज्झता विघ्ना सा विवेश स्वमन्दिरम्।
प्राप्ते च लग्नदिवसे निर्वृत्तोद्वाहमङ्गला॥ १०.२७॥

गत्वा पतिगृहं नीत्वा सोत्सवेन च तद्दिनम्।
सा पत्या सममध्यास्त शयनीयगृहं निशि॥ १०.२८॥
तत्र शय्यानिषण्णापि न तस्य प्रत्यपद्यत।
पत्युः समुद्रदत्तस्य परिष्वङ्गमसंमुखी॥ १०.२९॥
तेनानुनीयमानापि यदुदश्रुर्बभूव सा।
तत्स नाभिमतोऽस्म्यस्या नूनमित्यकरोद्धृदि॥ १०.३०॥
जगाद चानभिमतो यद्यहं तव सुन्दरि।
तन्मे नार्थस्त्वया गच्छ यः प्रियस्तव तं प्रति॥ १०.३१॥
तच्छ्रुत्वा सा नतमुखी शनैरेवमुवाच तम्।
त्वं मे प्राणाधिकः प्रेयान्विज्ञप्तिं किं तु मे शृणु॥ १०.३२॥
अनुतिष्ठ सहर्षं च प्रयच्छ च ममाभयम्।
कुरुष्व शपथं यावदार्यपुत्र वदामि ते॥ १०.३३॥
एवमुक्तवती कृच्छ्रात्तथा तेन कृते पुनः।
सलज्जं सविषादं च सभयं च जगाद सा॥ १०.३४॥
एकाकिनीं गृहोद्याने दृष्ट्वा मामेकदा युवा।
अरुणद्धर्मदत्ताख्यः सखा भ्रातुः स्मरातुरः॥ १०.३५॥
रक्षन्त्या सपरीवादं कन्यादानफलं पितुः।
मया हठप्रवृत्तस्य तस्य वाक्संयमः कृतः॥ १०.३६॥
पूर्वं कृतविवाहा त्वामुपैष्यामि ततः प्रियम्।
तन्मे सत्यवचः पाल्यमनुमन्यस्व तत्प्रभो॥ १०.३७॥
यावत्तन्निकटं गत्वा क्षणेनोपैमि तेऽन्तिकम्।
न हि शक्नोम्यतिक्रान्तुं सत्यमाबाल्य सेवितम्॥ १०.३८॥
इति तस्या वचोवज्रपातेन सहसा हतः।
समुद्रदत्तः सत्येन बद्धः क्षणमचिन्तयत्॥ १०.३९॥
अहो धिगन्यरक्तेयं गन्तव्यं ध्रुवमेतया।
तत्सत्यं हन्मि किं यातु कोऽस्याः परिणयग्रहः॥ १०.४०॥
इत्यालोच्यानुमेने तां यथेष्टगमनाय सः।
साप्युत्थाय ततस्तस्मान्निर्ययौ पतिवेश्मनः॥ १०.४१॥
तावदत्रोदयाद्रीन्द्रहर्म्याग्रं हिमदीधितिः।
आरुरोह कराक्रान्तहसत्पूर्वदिगङ्गनः॥ १०.४२॥

ततस्तमःस्वप्याश्लिष्य स्थितेष्वद्रिदरी प्रियाः।
सेवमानेषु भृङ्गेष्वप्यपरं कुमुदाकरम्॥ १०.४३॥
यान्ती मदनसेना सा मार्गे दृष्ट्वैकका निशि।
चौरेणाधाव्य केनापि रुरुधे वसनाञ्चले॥ १०.४४॥
का त्वं ब्रूहि क्व यासीति तेनोक्ता बिभ्यती च सा।
उवाच किं तवानेन मुञ्च कार्यमिहास्ति मे॥ १०.४५॥
ततश्चौरोऽब्रवीन्मत्तश्चौरात्त्वं मुच्यसे कथम्।
तच्छ्रुत्वा सावदत्तं च गृहाणाभरणानि मे॥ १०.४६॥
अथ चौरोऽभ्यधान्मुग्धे किमेभिरुपलैर्मम।
चन्द्रकान्ताननां तार्क्ष्यरत्नासितशिरोरुहाम्॥ १०.४७॥
वज्रमध्यां सुवर्णाङ्गीं पद्मरागाङ्घ्रिहारिणीम्।
जगदाभरणं नैव मोक्ष्यामि भवतीमहम्॥ १०.४८॥
इत्युक्ता तेन चौरेण विवशा सा वणिक्सुता।
आख्याय निजवृत्तान्तमेवं प्रार्थयते स्म तम्॥ १०.४९॥
क्षमस्व मे क्षणं यावत्कृत्वा सत्यानुपालनम्।
इहस्थस्यैव ते पार्श्वमागमिष्यामि सत्वरम्॥ १०.५०॥
नाहमुल्लङ्घयिष्यामि भद्र सत्यामिमां गिरम्।
श्रुत्वैतत्सत्यसंधां तां मत्वा चौरो मुमोच सः॥ १०.५१॥
तस्थौ प्रतीक्षमानश्च तत्रैव स तदागमम्।
सापि तस्यान्तिकं धर्मदत्तस्य वणिजो ययौ॥ १०.५२॥
स चाभीष्टामपि प्राप्तां तथा तां विजने स्थिताम्।
दृष्ट्वा पृष्ट्वा यथावृत्तं विचिन्त्य क्षणमब्रवीत्॥ १०.५३॥
सत्येन तव तुष्टोऽस्मि किं त्वया मे परस्त्रिया।
यावत्त्वां नेक्षते कश्चित्तावद्गच्छ यथागतम्॥ १०.५४॥
इति तेन परित्यक्ता सा तथेत्याययौ ततः।
चौरस्य निकटं तस्य प्रतिपालयतः पथि॥ १०.५५॥
ब्रूहि कस्तेऽत्र वृत्तान्तो गताया इति पृच्छते।
तस्मै सा तेन वणिजा यथा मुक्ता तथाब्रवीत्॥ १०.५६॥
ततः स चौरोऽवादीत्तां यद्येवं तन्मयाप्यसि।
विमुक्ता सत्यतुष्टेन गृहं साभरणा व्रज॥ १०.५७॥

एवं तेनापि सा त्यक्ता रक्षिता चानुयायिना।
अलुप्तशीला मुदिता पत्युरेवाययौ गृहम्॥ १०.५८॥
तत्र गुप्तं प्रविष्टा सा प्रहृष्टोपागता सती।
दृष्ट्वा पृष्टवते तस्मै पत्ये सर्वमवर्णयत्॥ १०.५९॥
सोऽप्यलुप्तमुखच्छायां तामसंभोगलक्षणाम्।
संभाव्याभग्नचारित्रां सत्यलाभरतां सतीम्॥ १०.६०॥
अदृष्टमनसं भार्यामभिनन्द्य कुलोचितम्।
तस्थौ समुद्रदत्तोऽथ तया सह यथासुखम्॥ १०.६१॥
इति तत्र कथामुक्त्वा पितृवनभूमौ तदा स वेतालः।
वदति स्म तं त्रिविक्रमसेनं वसुधाधिपं भूयः॥ १०.६२॥
तद्ब्रूहि चौरवणिजामेषां मध्यान्नरेन्द्र कस्त्यागी।
जानन्यदि न वदिष्यसि विदलिष्यति ते शिरः शतधा॥ १०.६३॥
तच्छ्रुत्वा स महीपतिरुज्झितमौनस्तमाह वेतालम्।
एषां चौरस्त्यागी न पुनर्वणिजावुभावपि तौ॥ १०.६४॥
यो हि पतिस्तामजहादत्याज्यां तादृशीं विवाह्यापि।
कुलजः सोऽन्यासक्तां भार्यां जानन्कथं वहतु॥ १०.६५॥
योऽप्यपरः स भयात्तामत्याक्षीत्कालजीर्णसंवेगः।
विदितार्थो भर्तास्याः प्रातर्ब्रूयान्नृपायेति॥ १०.६६॥
चौरस्तु गुप्तचारी निरपेक्षः पापकर्मकृत्प्राप्तम्।
स्त्रीरत्नं यदमुञ्चत्साभरणं तेन स त्यागी॥ १०.६७॥
एतच्छ्रुत्वैवांसतस्तस्य राज्ञो वेतालोऽगात्पूर्ववत्स्वं पदं सः।
राजा भूयोऽप्यत्र संप्राप्तुमेतत्प्रायादेवाखण्डितोद्दामधैर्यः॥ १०.६८॥

# एकादशो वेतालः

ततो गत्वा पुनः प्राप्य शिंशपातोऽग्रहीन्नृपः।
स त्रिविक्रमसेनोऽंसे वेतालं तं चचाल च॥ ११.१॥
आयान्तं च तमंसस्थो वेतालः सोऽब्रवीन्नृपम्।
राजन्विचित्रामेकां ते वर्णयामि कथां शृणु॥ ११.२॥
उज्जयिन्यामभूत्पूर्वं नाम्ना धर्मध्वजो नृपः।
तिस्रस्तस्याभवन्भार्या राजपुत्र्योऽतिवल्लभाः॥ ११.३॥
एका तास्विन्दुलेखेति तारावल्यपरा तथा।
नाम्ना मृगाङ्कवत्यन्या निःसामान्यवपुर्गुणाः॥ ११.४॥
ताभिः स विहरन्राजा राज्ञीभिस्तिसृभिः सह।
आसांचक्रे कृती तत्र जिताशेषरिपुः सुखम्॥ ११.५॥
एकदा तत्र संप्राप्ते वसन्तसमयोत्सवे।
प्रियाभिः सहितस्ताभिरुद्यानं क्रीडितुं ययौ॥ ११.६॥
तत्रालिमालामौर्वीकाः पश्यन्पुष्पानता लताः।
चापयष्टीरनङ्गस्य मधुना सज्जिता इव॥ ११.७॥
शृण्वंश्च तद्द्रुमाग्रस्थकोकिलोदीरितां गिरम्।
सम्भोगैकरसस्याज्ञामिव मानसजन्मनः॥ ११.८॥
सिषेवेऽन्तःपुरैः साकं स राजा वासवोपमः।
पानं मदस्य कंदर्पजीवितस्यापि जीवितम्॥ ११.९॥
तन्निःश्वाससुगन्धीनि तद्बिम्बौष्ठरुचीनि च।
प्रियापीतावशेषाणि पिबन्नेमे मधूनि सः॥ ११.१०॥
तत्र तस्येन्दुलेखाया राज्ञः केलिकचग्रहात्।
तस्याः पपात कर्णाग्रादुत्सङ्गे त्वङ्गदुत्पलम्॥ ११.११॥
तेनोरुपृष्ठे सहसा क्षते जातेऽभिघातजे।
अभिजाता महादेवी हा हेत्युक्त्वा मुमूर्च्छ सा॥ ११.१२॥

तद्दृष्ट्वा विह्वलेनार्त्या राज्ञा परिजनेन च।
समाश्वास्यत राज्ञी सा शनैः शीताम्बुमारुतैः॥ ११.१३॥
ततो नीत्वा स राजा तां राजधानीं भिषक्कृतैः।
प्रियामुपाचरद्दिव्यैरामुक्तव्रणपट्टिकाम्॥ ११.१४॥
रात्रौ च सुस्थितां दृष्ट्वा तां स राजा द्वितीयया।
तारावल्या सहारोहच्चन्द्रप्रासादमीश्वरः॥ ११.१५॥
तत्र तस्याङ्कसुप्ताया राज्ञस्तस्या हिमत्विषः।
करा जालपथैः पेतुरङ्गे चलितवाससि॥ ११.१६॥
ततः क्षणात्प्रबुद्धा सा हा दग्धास्मीति वादिनी।
शयनात्सहसोत्तस्थौ तदङ्गपरिमर्शिनी॥ ११.१७॥
किमेतदिति संभ्रान्तः प्रबुद्धोऽथ ददर्श सः।
उत्थाय राजा विस्फोटानङ्गे तस्या विनिर्गतान्॥ ११.१८॥
पृच्छन्तं सा च तं प्राह राज्ञी तारावली तदा।
नग्नाङ्गे पतितैरिन्दोः करैरेतत्कृतं मम॥ ११.१९॥
इत्युक्तवत्याः क्रन्दन्त्याः सार्तिराह्वयति स्म सः।
तस्याः परिजनं राजा विह्वलाकुलधावितम्॥ ११.२०॥
तेनास्याः कारयामास सजलैर्नलिनीदलैः।
शय्यामदापयच्चाङ्गे श्रीखण्डार्द्रविलेपनम्॥ ११.२१॥
तावद्बुद्ध्वा तृतीयास्य सा मृगाङ्कवती प्रिया।
तत्पार्श्वमागन्तुमना निर्ययौ निजमन्दिरात्॥ ११.२२॥
निर्गता साश्रृणोत्क्वापि गृहे धान्यावघातजम्।
निःशब्दायां निशि व्यक्तं विदूरे मुसलध्वनिम्॥ ११.२३॥
श्रुत्वैव हा मृतास्मीति ब्रुवाणा धुन्वती करौ।
उपाविशद्व्यथाक्रान्ता मार्गे सा मृगलोचना॥ ११.२४॥
ततः प्रतिनिवृत्यैव नीत्वा परिजनेन सा।
स्वमेवान्तःपुरं बाला रुदती शयनेऽपतत्॥ ११.२५॥
ददर्श तत्र तस्याश्च चिन्वन्साश्रुः परिच्छदः।
आलीनभ्रमरौ पद्माविव हस्तौ किणाङ्कितौ॥ ११.२६॥
गत्वा च सोऽब्रवीद्राज्ञे राजाप्यागत्य विह्वलः।
किमेतदिति पप्रच्छ सोऽथ धर्मध्वजः प्रियाम्॥ ११.२७॥

सापि प्रदर्श्य हस्तौ तमित्युवाच रुजान्विता।
श्रुते मुसलशब्दे मे जतावेतौ किणाङ्कितौ॥ ११.२८॥
ततः स दाहशमनं दापयामास हस्तयोः।
तस्याश्चन्दनलेपादि राजाद्भुतविषादवान्॥ ११.२९॥
एकस्या उत्पलेनापि पतता क्षतमाहितम्।
द्वितीयस्याः पुनर्दग्धमङ्गं शशिकरैरपि॥ ११.३०॥
एकस्यास्तु तृतीयस्याः श्रुतेनापि विनिर्गताः।
कष्टं मुसलशब्देन हस्तयोरीदृशाः किणाः॥ ११.३१॥
अहो युगपदेतासां प्रेयसीनां ममाधुना।
गुणोऽप्यत्यभिजातत्वं जातो दोषाय दैवतः॥ ११.३२॥
इति चिन्तयतस्तस्य भ्रमतोऽन्तःपुरेषु च।
त्रियामा शतयामेव कृच्छ्रात्सा नृपतेर्ययौ॥ ११.३३॥
प्रातश्च स भिषक्शल्यहर्तृभिः सह संव्यधात्।
तथा यथाभूदचिरात्स्वस्थान्तःपुरनिर्वृतः॥ ११.३४॥
एवमेतां कथामुक्त्वा वेतालोऽत्यद्भुतां तदा।
स त्रिविक्रमसेनं तं पप्रच्छांसस्थितो नृपम्॥ ११.३५॥
अभिजाततरैतासु राजन्राज्ञीषु का वद।
पूर्वोक्तः सोऽस्तु शापस्ते जानन्यदि न जल्पसि॥ ११.३६॥
तच्छ्रुत्वा सोऽब्रवीद्राजा सुकुमारतरात्र सा।
अस्पृष्टे मुसले यस्याः शब्देनैवोद्गताः किणाः॥ ११.३७॥
उत्पलेन्दुकरैः स्पर्शे वृत्ते त्वितरयोर्द्वयोः।
संजाता व्रणविस्फोटास्तेन तस्या न ते समे॥ ११.३८॥
इति तस्योक्तवतोऽंसाद्राज्ञो भूयो जगाम स स्वपदम्।
वेतालः स च राजा तथैव तं सुदृढनिश्चयोऽनुययौ॥ ११.३९॥

# द्वादशो वेतालः

स त्रिविक्रमसेनोऽथ पुनस्तं शिंशपातरुम्।
गत्वा प्राप्य च वेतालं राजा स्कन्धे चकार तम्॥ १२.१॥
प्रतस्थे च तमादाय तूष्णीमेव स पूर्ववत्।
ततो भूयस्तमाह स्म वेतालः सोऽंसपृष्ठतः॥ १२.२॥
राजन्नेवमनुद्विग्नः पर्याप्तमसि मे प्रियः।
तदेतां शृण्वखेदाय हृद्यामाख्यामि ते कथाम्॥ १२.३॥
अङ्गदेशे यशःकेतुरिति राजाभवत्पुरा।
क्ष्मामाश्रितोऽङ्गगुप्त्यर्थमदग्धोऽन्य इव स्मरः॥ १२.४॥
बाहुवीर्यजिताशेषवैरिवर्गस्य तस्य च।
दीर्घदर्शीत्यभून्मन्त्री शक्रस्येव बृहस्पतिः॥ १२.५॥
तस्मिन्मन्त्रिणि विन्यस्य राज्यं स हतकण्टकम्।
शनैः सुखैकसक्तोऽभूद्वयोरूपमदान्नृपः॥ १२.६॥
तस्थावन्तःपुरे शश्वन्नास्थाने प्रमदास्पदे।
शुश्राव रक्तिमद्गीतं वचनं न हितैषिणाम्॥ १२.७॥
रज्यति स्म च निश्चिन्तो जालवातायनेषु सः।
न पुना राजकार्येषु बहुच्छिद्रेषु जात्वपि॥ १२.८॥
दीर्घदर्शी तु तद्राज्यचिन्ताभारं समुद्वहन्।
अतिष्ठत्स महामन्त्री दिवानिशमतन्द्रितः॥ १२.९॥
नाममात्रे कृतधृतिं प्रक्षिप्य व्यसने नृपम्।
मन्त्री राज्ञः श्रियं भुङ्क्ते दीर्घदर्शीह साम्प्रतम्॥ १२.१०॥
इत्युत्पन्ने महत्यत्र जनवादेऽथ गेहिनीम्।
स्वैरं मेधाविनीं नाम दीर्घदर्शी जगाद सः॥ १२.११॥
प्रिये राज्ञि सुखासक्ते तद्भारं वहतोऽपि मे।
राज्यं भक्षितमेतेनेत्युत्पन्नमयशो जने॥ १२.१२॥

लोकवादश्च मिथ्यापि महतामिह दोषकृत्।
तत्याज किं न रामोऽपि जनवादेन जानकीम्॥ १२.१३॥
तदत्र किं मया कार्यमित्युक्ते तेन मन्त्रिणा।
भार्या मेधाविनी धीरा सान्वर्था तमभाषत॥ १२.१४॥
तीर्थयात्रापदेशेन युक्त्यापृच्छ्य महीपतिम्।
कंचित्कालं विदेशं ते गन्तुं युक्तं महामते॥ १२.१५॥
एवं ते निःस्पृहस्यैष जनवादो निवर्त्स्यति।
त्वय्यस्थिते ततो राज्यमुद्वक्ष्यति नृपः स्वयम्॥ १२.१६॥
ततश्चास्य शनैरेतद्व्यसनं हानिमेष्यति।
आगतस्यात्र निर्गर्हा भवित्री मन्त्रिता च ते॥ १२.१७॥
इत्युक्तो भार्यया गत्वा दीर्घदर्शी तथेति सः।
कथाप्रसङ्गे तं भूपं यशःकेतुं व्यजिज्ञपत्॥ १२.१८॥
अनुजानीहि मां राजन्दिवसान्कांश्चिदप्यहम्।
व्रजामि तीर्थयात्रायै धर्मो हि प्रेप्सितः स मे॥ १२.१९॥
तच्छ्रुत्वा सोऽब्रवीद्राजा मैवं तीर्थैर्विना परः।
दानादिः किं न धर्मोऽस्ति स्वर्ग्यस्ते स्वगृहेष्वपि॥ १२.२०॥
अथावोचत्स मन्त्री तमर्थशुद्ध्यादि मृग्यते।
दानादौ नित्यशुद्धानि तीर्थानि नृपते पुनः॥ १२.२१॥
यावच्च यौवनं राजंस्तावद्गम्यानि धीमता।
अविश्वास्ये शरीरे हि संगमस्तैः कुतोऽन्यदा॥ १२.२२॥
इति तस्मिन्वदत्येव राज्ञि चैवं निषेधति।
प्रविश्यात्र प्रतीहारो राजानं तं व्यजिज्ञपत्॥ १२.२३॥
देव व्योमसरोमध्यमंशुमाली विगाहते।
तदुत्तिष्ठत सैषा वः स्नानवेलातिवर्तते॥ १२.२४॥
श्रुत्वैतत्सहसा स्नातुमुदतिष्ठन्महीपतिः।
यात्रोन्मुखः स मन्त्री च तं प्रणम्य गृहं ययौ॥ १२.२५॥
तत्रावस्थाप्य भार्यां तामनुयात्रानिवारिताम्।
स प्रतस्थे ततो युक्त्या स्वभृत्यैरप्यतर्कितः॥ १२.२६॥
एकाकी च भ्रमंस्तांस्तान्देशांस्तीर्थानि च व्रजन्।
स प्राप पुण्ड्रविषयं दीर्घदर्शी सुनिश्चयः॥ १२.२७॥

तत्र पत्तन एकस्मिन्नदूरेऽब्धेः प्रविश्य सः।
एकं देवकुलं शैवं तत्प्राङ्गण उपाविशत्॥ १२.२८॥
तत्रार्ककरसंतापक्लान्तं दूराध्वधूसरम्।
ददर्श निधिदत्ताख्यो वणिग्देवार्चनागतः॥ १२.२९॥
स तं तथाविधं दृष्ट्वा सोपवीतं सुलक्षणम्।
संभाव्य चोत्तमं विप्रमातिथेयोऽनयद्गृहम्॥ १२.३०॥
तत्र चापूजयत्स्नानभोजनाद्यैस्तमुत्तमैः।
कः कुतस्त्वं क्व यासीति विश्रान्तं च स पृष्टवान्॥ १२.३१॥
दीर्घदर्शीति विप्रोऽहमङ्गदेशादिहागतः।
तीर्थयात्रार्थमित्येव गाम्भीर्यात्सोऽप्युवाच तम्॥ १२.३२॥
ततः स निधिदत्तोऽपि तं जगाद महावणिक्।
सुवर्णद्वीपगमनायोद्यतोऽहं वणिज्यया॥ १२.३३॥
तत्त्वं तिष्ठेह मद्गेहे यावदेष्याम्यहं ततः।
तीर्थयात्रापरिश्रान्तो विश्रान्तो ह्यथ यास्यसि॥ १२.३४॥
तच्छ्रुत्वा सोऽब्रवीद्दीर्घदर्शी तर्हि ममेह किम्।
त्वयैव सह यास्यामि सार्थवाह यथासुखम्॥ १२.३५॥
एवमस्त्विति तेनोक्ते साधुना सोऽथ तद्गृहे।
चिरादवाप्तशयनो निशां मन्त्री निनाय ताम्॥ १२.३६॥
अन्येद्युरथ तेनैव वणिजा सह वारिधिम्।
गत्वारुरोह तद्भाण्डपूर्णं प्रवहणं च सः॥ १२.३७॥
तेन गच्छन्प्रवहणेनाब्धिमद्भुतभीषणम्।
विलोकयन्स संप्राप स्वर्णद्वीपं क्रमेण तत्॥ १२.३८॥
क्व मन्त्रिमुख्यता चास्य क्व वाध्वोल्लङ्घिताम्बुधिः।
अयशोभीरवः किं न कुर्वते बत साधवः॥ १२.३९॥
तत्र द्वीपे समं तेन कंचित्कालमुवास सः।
वणिजा निधिदत्तेन कुर्वता क्रयविक्रयौ॥ १२.४०॥
आगच्छंश्च ततोऽकस्मात्तद्युक्तो वहनस्थितः।
कल्पवृक्षं ददर्शाब्धावूर्मेः पश्चात्समुत्थितम्॥ १२.४१॥
प्रवालशाखासुभगैः स्कन्धैर्जाम्बूनदोज्ज्वलैः।
फलैर्मणिमयैः कान्तैः कुसुमैश्चोपशोभितम्॥ १२.४२॥

तस्य स्कन्धे च सद्रत्नपर्यङ्कोत्सङ्गवर्तिनीम्।
कन्यामत्यद्भुताकारकमनीयामवैक्षत॥ १२.४३॥
अहो किमेतदित्येवं यावद्ध्यायति स क्षणम्।
तावत्सा वीणिनी कन्या गातुमेवं प्रचक्रमे॥ १२.४४॥
यत्कर्मबीजमुप्तं येन पुरा निश्चितं स तद्भुङ्क्ते।
पूर्वकृतस्य हि शक्यो विधिनापि न कर्तुमन्यथाभावः॥ १२.४५॥
इत्युद्गाय क्षणात्तस्मिन्नम्भोधौ दिव्यकन्यका।
सकल्पद्रुमपर्यङ्कशय्यात्रैव ममज्ज सा॥ १२.४६॥
किमप्यपूर्वमद्येदं मया दृष्टमिहाद्भुतम्।
क्वाब्धिः क्व दृष्टनष्टोऽत्र गायद्दिव्याङ्गनस्तरुः॥ १२.४७॥
यदि वा वन्द्य एषोऽब्धिराकरः शश्वदीदृशाम्।
लक्ष्मीन्दुपारिजाताद्या नास्मात्ते ते किमुद्गताः॥ १२.४८॥
इति तं चिन्तयन्तं च तत्क्षणं दीर्घदर्शिनम्।
विलोक्य विस्मयाविष्टं कर्णधारादयोऽब्रुवन्॥ १२.४९॥
एवमेषा सदैवेह दृश्यते वरकन्यका।
निमज्जति च तत्कालं तवैतद्दर्शनं नवम्॥ १२.५०॥
इत्युक्तस्तैः समं तेन निधिदत्तेन स क्रमात्।
मन्त्री चित्रीयमाणोऽब्धेस्तीरं पोतगतोऽभ्यगात्॥ १२.५१॥
तत्रोत्तारितभाण्डेन तेनैव वणिजा सह।
जगाम हृष्टभृत्येन सोत्सवं सोऽथ तद्गृहम्॥ १२.५२॥
स्थित्वा नातिचिरं तत्र निधिदत्तमुवाच तम्।
सार्थवाह भवद्गेहे विश्रान्तोऽहं चिरं सुखम्॥ १२.५३॥
इदानीं गन्तुमिच्छामि स्वदेशं भद्रमस्तु ते।
इत्युक्त्वा तमनिच्छन्तमप्यामन्त्र्य वणिक्पतिम्॥ १२.५४॥
दीर्घदर्शी स सत्त्वैकसहायः प्रस्थितस्ततः।
क्रमोल्लङ्घितदूराध्वा प्रापाङ्गविषयं निजम्॥ १२.५५॥
तत्र तं ददृशुश्चारा बहिर्नगरमागतम्।
ये यशःकेतुना राज्ञा प्राड्मुस्तास्तद्गवेषणे॥ १२.५६॥
तैश्च गत्वा स विज्ञप्तश्चारै राजा तमभ्यगात्।
स्वयं निर्गत्य नगरात्तद्विश्लेषसुदुःखितः॥ १२.५७॥

उपेत्य च परिष्वङ्गपूर्वं तमभिनन्द्य सः।
निनायाभ्यन्तरं भूपश्चिराध्वक्षामधूसरम्॥ १२.५८॥
त्यक्त्वास्मान्किं त्वया नीतं न परं बत मानसम्।
यावच्छरीरमप्येतन्निःस्नेहपरुषां दशाम्॥ १२.५९॥
किं वा भगवतो वेत्ति भवितव्यस्य को गतिम्।
यदकस्मात्तवैषाभूत्तीर्थादिगमने मतिः॥ १२.६०॥
तद्ब्रूहि के त्वया भ्रान्ता देशा दृष्टं च किं नवम्।
इति तत्र च तं राजा स जगाद स्वमन्त्रिणम्॥ १२.६१॥
ततः सुवर्णद्वीपान्तं सोऽध्वानं वर्णयन्क्रमात्।
अब्धावुद्गमिनीं तस्मै तां दृष्टां दिव्यकन्यकाम्॥ १२.६२॥
गायन्तीं त्रिजगत्सारभूतां कल्पतरुस्थिताम्।
यथावत्कथयामास दीर्घदर्शी महीभृते॥ १२.६३॥
स तां श्रुत्वैव च नृपस्तथा स्मरवशोऽभवत्।
यथा तया विना मेने निष्फले राज्यजीविते॥ १२.६४॥
जगाद च तमेकान्ते नीत्वा स्वसचिवं तदा।
द्रष्टव्यासौ मयावश्यं जीवितं नास्ति मेऽन्यथा॥ १२.६५॥
यामि त्वदुक्तेन पथा प्रणम्य भवितव्यताम्।
निवारणीयो नाहं ते नानुगम्यश्च सर्वथा॥ १२.६६॥
गुप्तमेको हि यास्यामि राज्यं रक्ष्यं तु मे त्वया।
मद्वचो मान्यथा कार्षीः शापितोऽसि ममासुभिः॥ १२.६७॥
इत्युक्त्वा तत्प्रतिवचो निरस्य विससर्ज तम्।
मन्त्रिणं स्वगृहं राजा चिरोत्कं स्वजनं प्रति॥ १२.६८॥
तत्रानल्पोत्सवेऽप्यासीद्दीर्घदर्शी सुदुर्मनाः।
स्वामिन्यसाध्यव्यसने सुखं सन्मन्त्रिणां कुतः॥ १२.६९॥
अन्येद्युश्च स तद्वस्तन्यस्तराज्यभरो नृपः।
यशःकेतुस्ततः प्रायान्निशि तापसवेषभृत्॥ १२.७०॥
गच्छंश्च कुशनाभाख्यं मुनिं मार्गे ददर्श सः।
सोऽत्र तं तापसाकल्पं प्रणतं मुनिरादिशत्॥ १२.७१॥
लक्ष्मीदत्तेन वणिजा सह पोतेन वारिधौ।
गत्वा प्रप्स्यसि तामिष्टां कन्यां व्रज निराकुलः॥ १२.७२॥

इति तद्वचसा प्रीतास्तं प्रणम्य स पार्थिवः।
गच्छन्देशान्नदीरद्रीन्क्रान्त्वा तं प्रापदम्बुधिम्॥ १२.७३॥
सुतारशङ्खधवलैर्वीचिभ्रूभिर्विकस्वरैः।
वीक्षमाणमिवावर्तनेत्रैरातिथ्यसंभ्रमात्॥ १२.७४॥
तत्तीरे वणिजा तेन मुनिप्रोक्तेन संगतिः।
लक्ष्मीदत्तेन जज्ञेऽस्य स्वर्णद्वीपं यियासुना॥ १२.७५॥
तेनैव सह चक्राङ्कपादमुद्रादि दर्शनात्।
प्रह्वेणारुह्य वहनं प्रतस्थे सोऽम्बुधौ नृपः॥ १२.७६॥
मध्यमब्धेश्च संप्राप्ते वहने वारिमध्यतः।
उदगात्कल्पविटपिस्कन्धस्था सात्र कन्यका॥ १२.७७॥
यावत्पश्यति तां राजा चकोर इव चन्द्रिकाम्।
तावत्सा गायति स्मैवं वल्लकीवाद्यसुन्दरम्॥ १२.७८॥
यत्कर्मबीजमुप्तं येन पुरा निश्चितं स तद्भुङ्क्ते।
पूर्वकृतस्य हि शक्यो विधिनापि न कर्तुमन्यथाभावः॥ १२.७९॥
तस्माद्यत्र यथा यद्भवितव्यं यस्य दैवयोगेन।
तत्र तथा तत्प्राप्त्यै विवशोऽसौ नीयतेऽत्र न भ्रान्तिः॥ १२.८०॥
इति सूचितभव्यार्थां गायन्तीं तां विभावयन्।
निःस्पन्दः स क्षणं तस्थौ राजा स्मरशराहतः॥ १२.८१॥
रत्नाकर नमः सत्यमगाधहृदयाय ते।
येन त्वयैतां प्रच्छाद्य विप्रलब्धो हरिः श्रिया॥ १२.८२॥
तत्सुरैरप्यलभ्यान्तं सपक्षक्ष्माभृदाश्रयम्।
शरणं त्वां प्रपन्नोऽहमिष्टसिद्धिं विधत्स्व मे॥ १२.८३॥
एवं यावत्समुद्रं तं स नतः स्तौति भूमिपः।
तावत्सा कन्यका तत्र निममज्ज सपादपा॥ १२.८४॥
तद्दृष्ट्वैवानुमार्गेऽस्याः स राजात्मानमक्षिपत्।
वारिधावत्र कामाग्निसंतापस्येव शान्तये॥ १२.८५॥
तद्वीक्ष्याशङ्कितं मत्वा विनष्टं तं स सज्जनः।
लक्ष्मीदत्तो वणिग्दुःखाद्देहत्यागोद्यतोऽभवत्॥ १२.८६॥
मा कार्षीः साहसं नास्ति मग्नस्यास्याम्भुधौ भयम्।
एषो राजा यशःकेतुर्नाम्ना तापसवेषभृत्॥ १२.८७॥

एतत्कन्यार्थमायातः पूर्वभार्येयमस्य च।
एतां प्राप्य पुनश्चासावङ्गराज्यं समेष्यति॥ १२.८८॥
इत्यथाश्वासितो वाचा तत्कालं गगनोत्थया।
सार्थवाहो यथाकामं स जगामेष्टसिद्धये॥ १२.८९॥
स राजापि यशःकेतुर्निमग्नोऽन्तो महोदधौ।
अकस्मान्नगरं दिव्यमपश्यज्जातविस्मयः॥ १२.९०॥
भास्वन्मणिमयस्तम्भैः काञ्चनोज्ज्वलभित्तिभिः।
विराजमानं प्रासादैर्मुक्ताजालगवाक्षकैः॥ १२.९१॥
नानारत्नशिलापट्टबद्धसोपानवापिकैः।
कामदैः कल्पवृक्षाढ्यैरुद्यानैरुपशोभितम्॥ १२.९२॥
समृद्धेऽपि पुरे तत्र निर्जनेऽथ गृहं गृहम्।
अनुप्रविश्य न यदा तां ददर्श प्रियां क्वचित्॥ १२.९३॥
तदा विचिन्वन्दृष्ट्वैकमुत्तुङ्गं मणिमन्दिरम्।
आरुह्य द्वारमुद्घाट्य प्रविवेश स भूपतिः॥ १२.९४॥
प्रविश्य चान्तः सद्रत्नपर्यङ्कस्थितमेककम्।
वस्त्राच्छादितसर्वाङ्गं शयानं कंचिदैक्षत॥ १२.९५॥
किं स्यात्सैवेति सोत्कण्ठमुद्घाटयति तन्मुखम्।
यावत्तावदपश्यत्तां स्वेप्सितामेव सोऽङ्गनाम्॥ १२.९६॥
स्रस्तनीलांशुकध्वान्तहसन्मुखशशिश्रियम्।
ज्योत्स्नावदातां पातालगतामिव दिवा निशाम्॥ १२.९७॥
तद्दर्शनेन चास्याभूदवस्था कापि सा तदा।
ग्रीष्मर्तौ मरुपान्थस्य सरित्संदर्शनेन या॥ १२.९८॥
साप्युन्मीलितचक्षुस्तं कल्याणाकृतिलक्षणम्।
वीक्ष्याकस्मात्तथाप्राप्तं संभ्रमाच्छयनं जहौ॥ १२.९९॥
कृतातिथ्या नतमुखी पूजयन्तीव पादयोः।
फुल्लेक्षणोत्पलन्यासैः शनैरेतमुवाच च॥ १२.१००॥
को भवान्किमगम्यं च प्रविष्टोऽसि रसातलम्।
राजचिह्नाङ्कितततनोः किं च ते तापसव्रतम्॥ १२.१०१॥
इत्यादिश महाभाग प्रसादो यदि ते मयि।
एवं तस्या वचः श्रुत्वा स राजा प्रत्युवाच ताम्॥ १२.१०२॥

अङ्गराजो यशःकेतुरिति नाम्नास्मि सुन्दरि।
आप्तादन्वहदृश्यां च त्वामश्रौषमिहाम्बुधौ॥ १२.१०३॥
ततस्त्वदर्थं कृत्वेमं वेषं राज्यं विमुच्य च।
आगत्यैष प्रविष्टोऽहमनुमार्गेण तेऽम्बुधिम्॥ १२.१०४॥
तन्मे कथय कासि त्वमित्युक्ते तेन चाथ सा।
सलज्जा सानुरागा च सानन्दा चैवमभ्यधात्॥ १२.१०५॥
मृगाङ्कसेन इत्यस्ति श्रीमान्विद्याधराधिपः।
मां मृगाङ्कवतीं नाम्ना विद्धि तस्य सुतामिमाम्॥ १२.१०६॥
स मामस्मिन्स्वनगरे विमुच्यैकाकिनीं पिता।
न जाने हेतुना केन गतः क्वापि सपौरकः॥ १२.१०७॥
तेनाहं शून्यवसतेर्निर्विण्णोन्मज्ज्य वारिधेः।
यन्त्रकल्पद्रुमारूढा गायामि भवितव्यताम्॥ १२.१०८॥
एवमुक्तवती तेन स्मरता तन्मुनेर्वचः।
तथारज्यत सा राज्ञा वचोभिः प्रेमपेशलैः॥ १२.१०९॥
यथानुरागविवशा भार्यात्वं तस्य तत्क्षणम्।
अङ्गीचकार वीरस्य समयं त्वेकमभ्यधात्॥ १२.११०॥
शुक्लकृष्णचतुर्दश्यामष्टम्यां चार्यपुत्र ते।
प्रतिमासमनायत्ता चतुरो दिवसानहम्॥ १२.१११॥
यत्र क्वापि दिनेष्वेषु गच्छन्ती चास्मि न त्वया।
प्रष्टव्या न निषेद्धव्या कारणं ह्यत्र विद्यते॥ १२.११२॥
एवं तामुक्तसमयां स राजा दिव्यकन्यकाम्।
तथेत्युक्त्वैव गान्धर्वविधिना परिणीतवान्॥ १२.११३॥
भेजे ततश्च संभोगसुखं तत्र तया सह।
यथाभूदन्य एवास्या मान्मथो मण्डनक्रमः॥ १२.११४॥
केशेषु स्रस्तमाल्येषु कचग्रहनखावली।
बिम्बाधरेऽथ निष्पीतनीरागे दशनक्षतिः॥ १२.११५॥
कुचयोः करजश्रेणिर्भिन्नमाणिक्यमालयोः।
लुप्ताङ्गरागेष्वङ्गेषु गाढालिङ्गनरागिता॥ १२.११६॥
इति तद्दिव्यसंभोगसुखावस्थितमत्र तम्।
सा मृगाङ्कवती भार्या भूपं प्राहेदमेकदा॥ १२.११७॥

त्वमिहैव प्रतीक्षेथाः कार्यार्थं क्वापि याम्यहम्।
अद्य सैषा हि संप्राप्ता मम कृष्णचतुर्दशी॥ १२.११८॥
इह स्थस्त्वार्यपुत्रामुं मा स्म गाः स्फाटिकं गृहम्।
मात्र वाप्यां निपतितो भूलोकं त्वं गमिष्यसि॥ १२.११९॥
इत्युक्त्वा सा तमामन्त्र्य ययौ तस्मात्पुराद्बहिः।
राजापि प्राप्तखड्गस्तां छन्नो जिज्ञासुरन्वगात्॥ १२.१२०॥
तत्रापश्यत्तमःश्यामं व्यात्तवक्त्रबिलं च सः।
साकारमिव पातालमायान्तं राक्षसं नृपः॥ १२.१२१॥
स राक्षसो निपत्यैव मुक्तघोररवस्तदा।
तां मृगाङ्कवतीं वक्त्रे निक्षिप्यैव निगीर्णवान्॥ १२.१२२॥
तद्दृष्ट्वैवातिकोपेन सहसा स ज्वलन्निव।
निर्मोकमुक्तभुजगश्यामलेन महासिना॥ १२.१२३॥
कोषाकृष्टेन धावित्वा राजसिंहोऽभिधावतः।
चिच्छेद रक्षसस्तस्य संदष्टौष्ठपुटं शिरः॥ १२.१२४॥
रक्षःकबन्धवान्तेन राज्ञस्तस्यास्रवारिणा।
क्रोधजोऽथ शशामाग्निर्न तु कान्तावियोगजः॥ १२.१२५॥
ततो मोहनिशान्धेऽस्मिन्विनष्टगतिके नृपे।
अकस्मान्मेघमलिनस्याङ्गं भित्त्वेव रक्षसः॥ १२.१२६॥
तस्योद्योतितदिक्चक्रा चन्द्रमूर्तिरिवामला।
सा मृगाङ्कवती जीवन्त्यक्षताङ्गी विनिर्ययौ॥ १२.१२७॥
तां तथा संकटोत्तीर्णां दृष्ट्वा कान्तां ससंभ्रमम्।
एह्येहीति वदन्राजा प्रधाव्यैवालिलिङ्ग सः॥ १२.१२८॥
प्रिये किमेतत्स्वप्नोऽयमुत मायेति तेन सा।
पृष्टा नृपेण संस्मृत्य विद्याधर्येवमब्रवीत्॥ १२.१२९॥
श‍ृण्वार्यपुत्र न स्वप्नो न मायेयमयं पुनः।
विध्याधरेन्द्रात्स्वपितुः शापोऽभूदीदृशो मम॥ १२.१३०॥
बहुपुत्रोऽपि स हि मे पिता पूर्वं वसन्निह।
मया विनातिवात्सल्यान्नाहारमकरोत्सदा॥ १२.१३१॥
अहं च सर्वदा शर्वपूजासक्तेह निर्जने।
चतुर्दश्योरथाष्टम्योरागच्छं पक्षयोर्द्वयोः॥ १२.१३२॥

एकदा च चतुर्दश्यामिहागत्य रसान्मम।
चिरं गौरीं समर्चन्त्या दैवादवसितं दिनम्॥ १२.१३३॥
तदहर्मत्प्रतीक्षः सन्क्षुधितोऽपि स मत्पिता।
नाभुङ्क्त नापिबत्किंचिदासीत्क्रुद्धस्तु मां प्रति॥ १२.१३४॥
ततो रात्रावुपेतां मां सापराधामधोमुखीम्।
भवितव्यबलग्रस्तमत्स्नेहः शपति स्म सः॥ १२.१३५॥
यथा त्वदवलेपेन ग्रस्तोऽद्याहमयं क्षुधा।
मासि मासि तथाष्टम्योश्चतुर्दश्योश्च केवलम्॥ १२.१३६॥
हरार्चनरसाद्यन्तीमत्रैव त्वां बहिः पुरे।
नाम्ना कृतान्तसंत्रासो राक्षसो निगरिष्यति॥ १२.१३७॥
भित्त्वा भित्त्वास्य हृदयं जीवन्ती च निरेष्यसि।
न स्मरिष्यसि शापं च न तां निगरणव्यथाम्॥ १२.१३८॥
स्थास्यस्येकाकिनी चात्रेत्युक्तशापवचाः शनैः।
सोऽनुनीतो मया ध्यात्वा शापान्तं मेऽब्रवीत्पिता॥ १२.१३९॥
भर्ता भूत्वा यशःकेतुनामाङ्गनृपतिर्यदा।
राक्षसेन निगीर्णां त्वां दृष्ट्वा तं निहनिष्यति॥ १२.१४०॥
तदा त्वं मोक्ष्यसे शापाद्धृदयात्तस्य निर्गता।
संस्मरिष्यसि शापादि विद्याः सर्वास्तथा निजाः॥ १२.१४१॥
इत्यादिश्य स शापान्तं त्यक्त्वा मामेककामिह।
निषधाद्रिं गतस्तातो भूलोकं सपरिच्छदः॥ १२.१४२॥
अहं तथा चरन्ती च शापमोहादिहावसम्।
क्षीणश्चैष स शापो मे जाता सर्वत्र च स्मृतिः॥ १२.१४३॥
तत्तातपार्श्वमधुना निषधाद्रिं व्रजाम्यहम्।
शापान्ते स्वां गतिं याम इत्येष समयो हि नः॥ १२.१४४॥
त्वमिहास्व स्वराष्ट्रं वा व्रज स्वातन्त्र्यमत्र ते।
एवं तयोक्ते स नृपो दुःखितोऽर्थयते स्म ताम्॥ १२.१४५॥
सप्ताहानि न गन्तव्यं प्रसीद सुमुखि त्वया।
क्षिपाव तावदौत्सुक्यमुद्याने क्रीडनैरिह॥ १२.१४६॥
त्वं गच्छाथ पितुः स्थानं यास्याम्यहमपि स्वकम्।
एतत्तद्वचनं मुग्धा तथेत्यङ्गीचकार सा॥ १२.१४७॥

ततोऽत्र रेमे स तया सहोद्यानेषु कान्तया।
सजलोत्पलनेत्रासु वापीषु षडहं नृपः॥ १२.१४८॥
मा स्म यातं विहायास्मानिति पूत्कुर्वतीष्विव।
उत्क्षिप्तवीचिहस्तासु हंससारसनिःस्वनैः॥ १२.१४९॥
सप्तमेऽह्नि स युक्त्या तां प्रियां तत्रानयद्गृहे।
भूलोकप्रापिणी यत्र सा यन्त्रद्वारवापिका॥ १२.१५०॥
तत्र कण्ठे गृहीत्वा तां तस्यां वाप्यां निपत्य सः।
उत्तस्थौ स्वपुरोद्यानवापीमध्यात्तया सह॥ १२.१५१॥
तत्र कान्तासखं प्राप्तं तं दृष्ट्वोद्यानपालकाः।
हृष्टास्तन्मन्त्रिणे गत्वा जगदुर्दीर्घदर्शिने॥ १२.१५२॥
सोऽप्येत्य पादपतितस्तमानीतेप्सिताङ्गनम्।
दृष्ट्वा प्रावेशयन्मन्त्री सपौरोऽभ्यन्तरं नृपम्॥ १२.१५३॥
अहो सैषा कथं प्राप्ता राज्ञा दिव्याङ्गनामुना।
व्योम्नीव विद्युदिव या क्षणदृश्या मयेक्षिता॥ १२.१५४॥
यद्यस्य लिखितं धात्रा ललाटाक्षरपङ्क्तिषु।
तदवश्यमसंभाव्यमपि तस्योपतिष्ठते॥ १२.१५५॥
इत्यत्र मन्त्रिमुख्येऽस्मिन्ध्यायत्यन्यजनेऽपि च।
दिव्यस्त्रीप्राप्तिसाश्चर्यं राजागमनसोत्सवे॥ १२.१५६॥
सा मृगाङ्कवती दृष्ट्वा तं स्वदेशगतं नृपम्।
इयेष पूर्णसप्ताहा यातुं वैद्याधरीं गतिम्॥ १२.१५७॥
नाविरासीच्च विद्यास्याः स्मृताप्युत्पतनी तदा।
ततः सा मुषितेवात्र विषादमगमत्परम्॥ १२.१५८॥
किमकस्माद्विषण्णेव दृश्यसे वद मे प्रिये।
इत्युक्ता तेन राज्ञा सा विध्यादर्येवमब्रवीत्॥ १२.१५९॥
स्थिताहं शापमुक्तापि त्वत्स्नेहाद्यदियच्चिरम्।
तेन विद्या मम भ्रष्टा नष्टा दिव्या च सा गतिः॥ १२.१६०॥
तच्छ्रुत्वा हन्त सिद्धेयं मम विद्याधरीति सः।
राजा ततो यशःकेतुः पूर्णं चक्रे महोत्सवम्॥ १२.१६१॥
तद्दृष्ट्वा दीर्घदर्शी स मन्त्री गत्वा गृहं निशि।
शयनीयगतोऽकस्माद्धृत्स्फोटेन व्यपद्यत॥ १२.१६२॥

ततोऽनुभूय तच्छोकं धृतराज्यभरः स्वयम्।
यशःकेतुश्चिरं तस्थौ स मृगाङ्कवतीयुतः ॥ १२.१६३ ॥
इत्येतां कथयित्वा मार्गे तस्मै कथां स वेतालः।
अवदत्पुनस्त्रिविक्रमसेनं नृपतिं तमंसगतः ॥ १२.१६४ ॥
तद्ब्रूहि भूपते ते संपन्ने स्वामिनस्तथाभ्युदये।
हृदयं सपदि स्फुटितं तस्य महामन्त्रिणः किमिति ॥ १२.१६५ ॥
दिव्यस्त्री न मया किं प्राप्तेति शुचास्फुटद्धृदयम्।
किं वा राज्यमभीप्सोर्राजागमजेन दुःखेन ॥ १२.१६६ ॥
एतच्च यदि न वक्ष्यसि मह्यं जानन्नपीह तद्राजन्।
धर्मश्च तव विनङ्क्ष्यति यास्यति दलशश्च झटिति शिरः ॥ १२.१६७ ॥
श्रुत्वेति तु त्रिविक्रमसेनो राजा जगाद वेतालम्।
नैतत्तस्मिन्द्वयमपि शुभचरिते युज्यते हि मन्त्रिवरे ॥ १२.१६८ ॥
किं तु स्त्रीमात्ररसादुपेक्षितं येन भूभुजा राज्यम्।
तस्याधुना तु दिव्यस्त्रीरक्तस्यात्र का वार्ता ॥ १२.१६९ ॥
तन्मे कष्टेऽपि कृते प्रत्युत दोषो बताधिकीभूतः।
इति तस्य विभावयतो हृदयं तन्मन्त्रिणः स्फुटितम् ॥ १२.१७० ॥
इत्युक्ते नरपतिना पुनः स मायी वेतालो निजपदमेव तज्जगाम।
राजापि प्रसभमवाप्तुमन्वधावद्भूयोऽपि द्रुतमथ तं स धीरचेताः ॥ १२.१७१ ॥

# त्रयोदशो वेतालः

अथ गत्वा पुनः प्राप्य शिंशपातस्ततो नृपः।
स त्रिविक्रमसेनस्तं स्कन्धे वेतालमाददे॥ १३.१ ॥
आयान्तं च स वेतालो भूयस्तं नृपमब्रवीत्।
राजञ्शृणु कथामेकां संक्षिप्तां वर्णयामि ते॥ १३.२ ॥
अस्ति वाराणसी नाम पुरी हरनिवासभूः।
देवस्वामीति तत्रासीन्मान्यो नरपतेर्द्विजः॥ १३.३ ॥
महाधनस्य तस्यैको हरिस्वामीत्यभूत्सुतः।
तस्य भार्या च लावण्यवतीत्यत्युत्तमाभवत्॥ १३.४॥
तिलोत्तमादिनाकस्त्रीनिर्माणे प्राप्तकौशलः।
अनर्घरूपलावण्यां मन्ये यां निर्ममे विधिः॥ १३.५॥
तया स कान्तया साकं हरिस्वामी कदाचन।
रतिश्रान्तो ययौ निद्रां हर्म्ये चन्द्रांशुशीतले॥ १३.६ ॥
तत्कालं तेन मार्गेण कामचारी विहायसा।
आगान्मदनवेगाख्यो विद्याधरकुमारकः॥ १३.७॥
स तत्र लावण्यवतीं पत्युः पार्श्वे ददर्श ताम्।
सुप्तां रतिक्लमस्रस्तवस्त्रव्यक्ताङ्गसौष्ठवाम्॥ १३.८॥
तद्रूपहृतचित्तः सन्मदनान्धः स तत्क्षणम्।
सुप्तामेव निपत्यैतां गृहीत्वा नभसा ययौ॥ १३.९॥
क्षणात्प्रबुद्धोऽथ युवा हरिस्वामी स तत्पतिः।
प्राणेश्वरीमपश्यंस्तामुदतिष्ठत्ससंभ्रमः॥ १३.१०॥
अहो किमेतत्क गता कुपिता सा नु किं मयि।
छन्ना जिज्ञासितुं किं मे चित्तं परिहसत्युत॥ १३.११॥
इत्यनेकविकल्पौघव्याकुलस्तामितस्ततः।
हर्म्यप्रासादवलभीष्वन्विष्यन्सोऽभ्रमन्निशि॥ १३.१२॥

अगृहोद्यानतश्चिन्वन्यन्न प्राप कुतोऽपि ताम्।
तत्स शोकाग्निसंतप्तो विललापाश्रुगद्गदम्॥ १३.१३॥
हा चन्द्रबिम्बवदने हा ज्योत्स्नागौरि हा प्रिये।
रात्र्या तुल्यगुणद्वेषात्किं नु सोढासि नानया॥ १३.१४॥
त्वया कान्त्या जितो बिभ्यदिव चन्दनशीतलैः।
करैरसुखयद्यो मां सोऽयमिन्दुस्त्वया विना॥ १३.१५॥
लब्धान्तर इवेदानीं तैरेव तुदति प्रिये।
प्रज्वलद्भिरिवाङ्गारैर्विषदिग्धैरिवाशुगैः॥ १३.१६॥
इत्यादि क्रन्दतस्तस्य सा हरिस्वामिनस्तदा।
कृच्छ्राद्व्यतीयाय निशा न पुनर्विरहव्यथा॥ १३.१७॥
प्रातर्बिभेद विश्वस्य करैः संतमसं रविः।
भेत्तुं न चक्षमे तस्य मोहान्धतमसं पुनः॥ १३.१८॥
विलब्ध इव चक्राह्वैस्तस्य तीर्णनिशैस्तदा।
भेजे शतगुनीभावं करुणाक्रन्दितध्वनिः॥ १३.१९॥
स्वजनैः सान्त्व्यमानोऽपि वियोगानलदीपितः।
न च लेभे द्विजयुवा धृतिं तां प्रेयसीं विना॥ १३.२०॥
इह स्थितमिह स्नातं कृतमत्र प्रसाधनम्।
विहृतं च तयात्रेति ययौ त्वित इतो रुदन्॥ १३.२१॥
मृता तावन्न सा तत्किमात्मैवं हन्यते त्वया।
अवश्यं तामवाप्तासि जीवञ्जातु कुतश्चन॥ १३.२२॥
तद्धैर्यमवलम्बस्व तां गवेषय च प्रियाम्।
अप्राप्यं नाम नेहास्ति धीरस्य व्यवसायिनः॥ १३.२३॥
इति बन्धुसुहृद्वाक्यैर्बोधितः सोऽथ कृच्छ्रतः।
दिनैः कैश्चिद्धरिस्वामी बबन्ध धृतिमास्थया॥ १३.२४॥
अचिन्तयच्च सर्वस्वं कृत्वा ब्राह्मणसादहम्।
भ्रमामि तावत्तीर्थानि क्षपयाम्यघसंचयम्॥ १३.२५॥
पापक्षयाद्धि तां जातु प्रियां भ्राम्यन्नवाप्नुयाम्।
इत्यालोच्य यथावस्थं स्नानाद्युत्थाय सोऽकरोत्॥ १३.२६॥
अन्येद्युश्च विचित्रान्नपानं सत्त्रे द्विजन्मनाम्।
चकारावारितं किं च ददौ धनमशेषतः॥ १३.२७॥

ब्राह्मण्यमात्रवित्तस्य निर्गत्यैव स्वदेशतः।
प्रियाप्राप्तीच्छया सोऽथ तीर्थानि भ्रमितुं ययौ॥ १३.२८॥
भ्राम्यतश्च जगामास्य भीमो ग्रीष्मर्तुकेसरी।
प्रचण्डादित्यवदनो दीप्ततद्रश्मिकेसरः॥ १३.२९॥
प्रियाविरहसंतप्तपान्थनिःश्वासमारुतैः।
न्यस्तोष्माण इवात्युष्णा वान्ति स्म च समीरणाः॥ १३.३०॥
शुष्यद्विदीर्णपङ्काश्च हृदयैः स्फुटितैरिव।
जलाशया ददृशिरे घर्मलुप्ताम्बुसंपदः॥ १३.३१॥
चीरीचीत्कारमुखरास्तापम्लानदलाधराः।
मधुश्रीविरहान्मार्गेष्वरुदन्निव पादपाः॥ १३.३२॥
तस्मिन्कालेऽर्कतापेन वियोगेन क्षुधा तृषा।
नित्याध्वना च स क्लान्तो विरूक्षक्षामधूसरः॥ १३.३३॥
भोजनार्थि हरिस्वामी प्राप ग्रामं क्वचिद्भ्रमन्।
पद्मनाभाभिधानस्य गृहं विप्रस्य सत्त्रिणः॥ १३.३४॥
तत्र दृष्ट्वा स भुञ्जानान्विप्रानभ्यन्तरे बहून्।
द्वारशाखां समालम्ब्य तस्थौ निःशब्दनिश्चलः॥ १३.३५॥
तथास्थितं तमालोक्य सत्त्रिणस्तस्य गेहिनी।
पद्मनाभस्य संजातदया साध्वी व्यचिन्तयत्॥ १३.३६॥
अहो क्षुन्नाम गुर्व्येषा न कुर्यात्कस्य लाघवम्।
यदेवमयमन्नार्थी कोऽप्यास्ते द्वार्यधोमुखः॥ १३.३७॥
दूराध्वाभ्यागतः स्नातस्तावत्क्षीणेन्द्रियः क्षुधा।
तदेषश्चान्नदानस्य पात्रमित्यवधार्य सा॥ १३.३८॥
परमान्नभृतं साध्वी तस्मै सघृतशर्करम्।
पात्रमुत्क्षिप्य पाणिभ्यामानीय प्रश्रिता ददौ॥ १३.३९॥
जगाद चैतं भुङ्क्ष्वैतद्गत्वा वापीतटे क्वचित्।
इदं स्थानं समुच्छिष्टं भुञ्जानैर्ब्राह्मणैर्वृतम्॥ १३.४०॥
तथेति सोऽन्नपात्रं तद्गृहीत्वा नातिदूरतः।
गत्वा स्थापितवान्वाप्यास्तटे वटतरोरधः॥ १३.४१॥
प्रक्षाल्य पाणिपादं च वाप्यामाचम्य चात्र सः।
यावद्भक्षयितुं तुष्टः परमान्नमुपैति तत्॥ १३.४२॥

तावद्गृहीत्वा कृष्णाहिं चञ्च्वा पादयुगेन च।
श्येनः कुतश्चिदागत्य तरौ तस्मिन्नुपाविशत्॥ १३.४३॥
तेन तस्योह्यमानस्य सर्पस्याक्रम्य पक्षिणा।
उत्क्रान्तजीवितस्यास्याद्विषलाला विनिर्ययौ॥ १३.४४॥
सा तत्राधःस्थिते तस्मिन्नन्नपात्रेऽपतत्तदा।
तच्चादृष्ट्वा हरिस्वामी स एत्यान्नमभुङ्क्त तत्॥ १३.४५॥
क्षुधार्तस्य तदा तस्य मृष्टान्नं तत्क्षणेन तत्।
कृत्स्नं भुक्तवतस्तीव्रा प्रोदभूद्विषवेदना॥ १३.४६॥
अहो विधौ विपर्यस्ते न विपर्यस्यतीह किम्।
यद्विषीभूतमन्नं मे सक्षीरघृटशर्करम्॥ १३.४७॥
इति जल्पन्विषार्तः स हरिस्वामी परिस्खलन्।
गत्वा तां सत्त्रिणस्तस्य विप्रस्योवाच गेहिनीम्॥ १३.४८॥
त्वद्दत्ताद्विषमन्नान्मे जातं तद्विषमन्त्रिणम्।
कंचिन्ममानय क्षिप्रं ब्रह्महत्यान्यथास्ति ते॥ १३.४९॥
इत्युक्त्वैव स तां साध्वीं किमेतदिति विह्वलाम्।
हरिस्वामी परावृत्तनेत्रः प्राणैर्व्ययुज्यत॥ १३.५०॥
ततः सा तेन निर्दोषाप्यातिथेय्यपि सत्त्रिणा।
भार्या निष्कासिता गेहान्मिथ्यातिथिवधक्रुधा॥ १३.५१॥
साप्युत्पन्नमृषावद्या सुशुभादपि कर्मणः।
जातावमाना तपसे साध्वी तीर्थमशिश्रियत्॥ १३.५२॥
कस्य विप्रवधः सोऽस्तु सर्पश्येनान्नदेश्विति।
तदभूद्धर्मराजाग्रे वादो नासीत्तु निर्णयः॥ १३.५३॥
तत्त्रिविक्रमसेन त्वं रजन्ब्रूहि ममाधुना।
कस्य सा ब्रह्महत्येति पूर्वः शापः स तेऽन्यथा॥ १३.५४॥
इति वेतालतो राजा श्रुत्वा शापनियन्त्रितः।
स त्रिविक्रमसेनस्तं मुक्तमौनोऽब्रवीदिदम्॥ १३.५५॥
तस्य तत्पातकं तावत्सर्पस्य यदि वास्य कः।
विवशस्यापराधोऽस्ति भक्ष्यमाणस्य शत्रुणा॥ १३.५६॥
अथ स्येनस्य तेनापि किं दुष्टं क्षुधितात्मना।
अकस्मात्प्राप्तमानीय भक्ष्यं भक्षयता निजम्॥ १३.५७॥

दंपत्योरन्नदात्रोर्वा तयोरेकस्य वा कुतः।
अभाव्यदोषौ धर्मैकप्रवृत्तौ तावुभौ यतः॥ १३.५८॥
तदहं तस्य मन्ये सा ब्रह्महत्या जडात्मनः।
अविचार्यैव यो ब्रूयादेषामेकतमस्य ताम्॥ १३.५९॥
इत्युक्तवतोऽस्य नृपस्यांसाद्भूयोऽप्यगात्स वेतालः।
निजपदमेव नृपोऽपि स पुनरपि धीरस्तमन्वगादेव॥ १३.६०॥

# चतुर्दशो वेतालः

स त्रिविक्रमसेनोऽथ गत्वा तं शिंशपातरोः।
भूयोऽप्यासाद्य वेतालं स्कन्धे जग्राह भूपतिः॥ १४.१॥
प्रस्थितं च तमुर्वीशं स वेतालोऽभ्यधात्पुनः।
राजञ्श्रान्तोऽसि तच्चित्रां कथामाख्यामि ते श‍ृणु॥ १४.२॥
अस्त्ययोध्येति नगरी राजधानी बभूव या।
रक्षःकुलकृतान्तस्य रामरूपस्य शार्ङ्गिणः॥ १४.३॥
तस्यां राजाभवद्वीरकेतुर्नाम ररक्ष यः।
क्षोणीमिमां महाबाहुः प्राकारो नगरीमिव॥ १४.४॥
तस्मिन्महीपतावस्यां पुर्यामेको महावणिक्।
रत्नदत्ताभिधानोऽभूद्वणिङ्गीवहनायकः॥ १४.५॥
नन्दयन्त्यभिधानायां पत्न्यां तस्योदपद्यत।
सुता रत्नवती नाम देवताराधनार्जिता॥ १४.६॥
सा च तस्य पितुर्वेश्मन्यवर्धत मनस्विनी।
रूपलावण्यविनयैः सहैव सहजैर्गुणैः॥ १४.७॥
यौवनस्थां च तां तस्माद्रत्नदत्तान्न केवलम्।
महान्तो वणिजो यावद्राजानोऽपि ययाचिरे॥ १४.८॥
सा तु पुंद्वेषिणी नैच्छद्भर्तारमपि वासवम्।
प्राणत्यागोद्यता सेहे न विवाहकथामपि॥ १४.९॥
तेन तस्याः पिता तूष्णीं तस्थौ वात्सल्यदुःस्थितः।
स च प्रवादोऽयोद्यायां तस्यां सर्वत्र पप्रथे॥ १४.१०॥
अत्रान्तरे सदा चौरैर्मुष्यमाणाः किलाखिलाः।
संभूयात्र नृपं पौरा वीरकेतुं व्यजिज्ञपन्॥ १४.११॥
नित्यं मुष्यामहे चौरै रात्रौ रात्राविह प्रभो।
लक्ष्यन्ते ते च नास्माभिस्तद्देवो वेत्तु यत्परम्॥ १४.१२॥

इति पौरैः स विज्ञप्तो राजा तामभितः पुरीम्।
तस्करान्वेषणे छन्नानादिशद्रात्रिरक्षकान्॥ १४.१३॥
तेऽपि प्रापुर्न यच्चौरान्पुरी सामुष्यतैव च।
तदैकदा स्वयं राजा निशि स्वैरं विनिर्ययौ॥ १४.१४॥
एकाकी चात्तशस्त्रोऽत्र भ्रमन्सोऽपश्यदेकतः।
एकं प्राकारपृष्ठेन यान्तं कमपि पूरुषम्॥ १४.१५॥
निःशब्दपदविन्यासविचित्रगतिकौशलम्।
सशङ्कलोलनयनं पश्यन्तं पृष्टतो मुहुः॥ १४.१६॥
अयं स नूनं चौरो मे मुष्णात्येकचरः पुरीम्।
इति मत्वैव निकटं स तस्योपययौ नृपः॥ १४.१७॥
ततः स चौरो दृष्ट्वा तं नृपं कोऽसीत्यभाषत।
चौरोऽहमिति राजा तं चौरं प्रत्यब्रवीत्स तम्॥ १४.१८॥
सोऽथ चौरोऽभ्यधाद्दृष्ट्वा तर्हि तुल्योऽसि मे सुहृत्।
तदेहि मद्गृहं तावन्मित्राचारं करोमि ते॥ १४.१९॥
तच्छ्रुत्वा स तथेत्युक्त्वा तेनैव सह भूपतिः।
ययौ वनान्तर्धरणीखातान्तर्वर्ति तद्गृहम्॥ १४.२०॥
अशेषभोगभोगाढ्यं भास्वद्दीपप्रकाशितम्।
नवीनमिव पातालं बलिराजानधिष्ठितम्॥ १४.२१॥
तत्र प्रविष्टे तस्मिंश्च कृतासनपरिग्रहे।
राज्ञि सोऽभ्यन्तरगृहं प्रविवेशाथ तस्करः॥ १४.२२॥
तत्क्षणं च तमेत्यैका दासी तत्रावदन्नृपम्।
महाभाग प्रविष्टस्त्वमिह मृत्युमुखे कथम्॥ १४.२३॥
एकचौरो ह्यसौ पापं निर्गत्यातः करिष्यति।
ध्रुवं विस्वासघातीति तदितस्त्वरितं व्रज॥ १४.२४॥
इत्युक्तः स तया राजा निर्गत्यैव ततो द्रुतम्।
गत्वा स्वराजधानीं च निशि सैन्यान्यसज्जयत्॥ १४.२५॥
संनद्धसैन्यश्चागत्य दस्योस्तस्य रुरोध तत्।
भूगृहद्वारविवरं रसत्तूर्याकुलैर्बलैः॥ १४.२६॥
ततो रुद्धे गृहे वृत्तं प्रतिभेदमवेत्य सः।
मरणे निश्चितश्चौरः शूरो युद्धाय निर्ययौ॥ १४.२७॥

निर्गतश्च रणे चक्रे पराक्रमममानुषम्।
करांश्चकर्त करिणां जङ्घाश्चिच्छेद वाजिनाम्॥ १४.२८॥
जहार च शिरांस्येको भटानां खड्गचर्मभृत्।
ततस्तं क्षपितानीकमभ्यधावत्स्वयं नृपः॥ १४.२९॥
स तस्य खड्गविद्याज्ञो राजा करणयुक्तितः।
हस्ताज्जहार निस्त्रिंशमथ तां क्षुरिकामपि॥ १४.३०॥
अशस्त्रं मुक्तशस्त्रोऽथ बाहुयुद्धेन तं नृपः।
चौरं निहत्य धरणौ सजीवग्राहमग्रहीत्॥ १४.३१॥
निनाय तं च संयम्य सधनं नगरीं निजाम्।
प्रातश्चाज्ञापयत्तस्य शूलारोपणनिग्रहम्॥ १४.३२॥
नीयमानं च तं वध्यभूमिं चौरं सडिण्डिमम्।
ददर्श सा रत्नवती वणिक्कन्यात्र हर्म्यतः॥ १४.३३॥
व्रणितं धूलिलिप्ताङ्गमप्येतं मारमोहिता।
दृष्ट्वैव गत्वा पितरं रत्नदत्तमुवाच सा॥ १४.३४॥
वधाय नीयते योऽयमेष भर्ता वृतो मया।
तन्नृपाद्रक्ष तातैनं न चेदेनमनु म्रिये॥ १४.३५॥
तच्छ्रुत्वा तां पितावादीत्किमिदं पुत्रि भाषसे।
या त्वं नेच्छसि भूपालामपि भर्तॄनभीप्सतः॥ १४.३६॥
सा पापं तस्करमिमं वाञ्छस्यापद्गतं कथम्।
इत्यादि पित्रा प्रोक्तापि निश्चयान्न चचाल सा॥ १४.३७॥
ततः स तत्पिता गत्वा तस्य चौरस्य सत्वरम्।
सर्वस्वेनापि राजानं वधान्मोक्षमयाचत॥ १४.३८॥
राजा तु तं न तत्याज हेमकोटिशतैरपि।
स्वशरीरपणानीतं चौरं सर्वापहारिणम्॥ १४.३९॥
ततः पितर्युपायाते विमुखे सा वणिक्सुता।
अनुमर्तुं कृतस्नाना वार्यमाणापि बन्धुभिः॥ १४.४०॥
आरुह्य शिबिकां तस्य दस्योर्वध्यभुवं ययौ।
अन्वीयमाना रुदता पित्रा मात्रा जनेन च॥ १४.४१॥
तावच्च वधकैः सोऽत्र चौरः शूलेऽधिरोपितः।
तां ददर्श गलत्प्राणस्तथा सज्ञातिमागताम्॥ १४.४२॥

जनाच्छ्रुत्वा च वृत्तान्तमश्रु मुक्त्वा क्षणं ततः।
हसन्स चौरः किमपि प्राणाञ्शूलगतो जहौ॥ १४.४३॥
ततोऽवतारितं शूलात्सा तच्चौरकलेवरम्।
आदाय चारुरोहात्र चितां साध्वी वणिक्सुता॥ १४.४४॥
तत्क्षणं च श्मशानेऽत्र भैरवः कृतसंनिधिः।
अदृश्यो भगवानेवं तामुवाचान्तरिक्षतः॥ १४.४५॥
अस्मिन्स्वयंवरपतावेवं भक्त्या तवानया।
तुष्टोऽस्मि तद्वरं मत्तः प्रार्थयस्व पतिव्रते॥ १४.४६॥
तच्छ्रुत्वैव वरं देवादेवं वव्रे प्रणम्य सा।
नाथ पुत्रशतं भूयादपुत्रस्यापि मत्पितुः॥ १४.४७॥
येनानन्यसुतो नैषः प्राणाञ्जह्यान्मया विना।
इति प्रोक्तवतीमेनां साध्वीं देवोऽब्रवीत्पुनः॥ १४.४८॥
पितुः पुत्रशतं तेऽस्तु वरमन्यं वृणीष्व च।
त्वादृशी दृढसत्त्वा हि नैतावन्मात्रमर्हति॥ १४.४९॥
तदाकर्ण्याथ सावादीत्प्रसन्नो मयि चेत्प्रभुः।
तज्जीवत्वेष भर्ता मे धार्मिकश्च सदास्त्विति॥ १४.५०॥
एवमस्त्वक्षतो जीवन्नुत्तिष्ठत्वेष ते पतिः।
धार्मिकश्चास्तु राजास्य वीरकेतुश्च तुष्यतु॥ १४.५१॥
इत्युक्तवत्यनालक्ष्यमूर्तौ शर्वे नभःस्थिते।
उत्तस्थावक्षताङ्गोऽत्र चौरो जीवंस्तदैव सः॥ १४.५२॥
ततो विस्मितहृष्टः सन्रत्नदत्तः सुतां वणिक्।
आदाय तां रत्नवतीं चौरं जामातरं च तम्॥ १४.५३॥
प्रहृष्टैर्बान्धवैः साकं प्रविश्य निजमन्दिरम्।
लब्धपुत्रवरश्चक्रे स्वानन्दोचितमुत्सवम्॥ १४.५४॥
ज्ञातवृत्तान्ततुष्टश्च तदैवानाय्य तं नृपः।
एकवीरं वीरकेतुश्चौरं सेनापतिं व्यधात्॥ १४.५५॥
चौर्यान्निवृत्तोऽथ स तां परिणीय वणिक्सुताम्।
एकवीरः सुखं तस्थौ मार्गस्थो राजसंमतः॥ १४.५६॥
इति कथयित्वा स कथां वेतालो दत्तपूर्वशापभयम्।
अंसस्थितस्त्रिविक्रमसेनं पप्रच्छ तं क्षितिपम्॥ १४.५७॥

राजन्ब्रूहि सपितृकामुपस्थितां तां वणिक्सुतां दृष्ट्वा।
चौरेण शूलपृष्टे रुदितं हसितं च किं तेन॥ १४.५८॥
अथ राजा प्रत्यवदद्रुदितं चौरेण दुःखतस्तेन।
नास्यानृण्यमकारणबन्धोर्यातोऽस्मि वणिज इति॥ १४.५९॥
आश्चर्यतश्च हसितं किमियं कन्या नृपान्वरान्हित्वा।
मय्यस्मिन्ननुरक्ता स्त्रीचित्तमहो विचित्रमिति॥ १४.६०॥
इत्युक्तवाक्यस्य महीभृतोऽंसान्मायी स्वशक्त्यैव तदा जगाम।
स्वं धाम वेतालवरः स राजाप्येतं पुनः पूर्ववदन्वगच्छत्॥ १४.६१॥

# पञ्चदशो वेतालः

ततो गत्वा पुनः प्राप्य वेतालं शिंशपातरोः।
स त्रिविक्रमसेनस्तमादायोदचलत्पुनः॥ १५.१॥
आयान्तं तं च राजानं स वेतालोऽंसपृष्ठगः।
जगाद भूयोऽप्येतां ते राजन्वच्मि कथां शृणु॥ १५.२॥
अभून्नेपालविषये नाम्ना शिवपुरं पुरम्।
यथार्थनामा तत्रासीद्यशःकेतुः पुरा नृपः॥ १५.३॥
स मन्त्रिणि न्यस्य भरं प्रज्ञासागरसंज्ञके।
चन्द्रप्रभाख्यया देव्या सार्धं भोगानसेवत॥ १५.४॥
कालेन तस्यां देव्यां च तस्याजायत कन्यका।
राज्ञः शशिप्रभा नाम जगन्नेत्रशशिप्रभा॥ १५.५॥
क्रमेण यौवनस्था सा मधुमासे कदाचन।
ययौ यात्रोत्सवं द्रष्टुमुद्यानं सपरिच्छदा॥ १५.६॥
तत्रैकदेशेऽपश्यत्तां कुसुमावचयोद्यताम्।
उत्क्षिप्तबाहुलतिकालक्षितैकपयोधराम्॥ १५.७॥
प्रसूनवृन्तविगलत्संदंशकरशोभिनीम्।
आढ्यपुत्रो मनःस्वामी नाम यात्रागतो द्विजः॥ १५.८॥
स तया दृष्टया सद्यो हृतस्य मनसो युवा।
मनःस्वाम्यपि नैवाभूत्स्वामी मदनमोहितः॥ १५.९॥
मार्गणानां कृते किं स्विद्रतिरेषा मनोभुवः।
वसन्तसंभृतानीह पुष्पाण्युच्चिनुते स्वयम्॥ १५.१०॥
किं वार्चयितुकामेयं माधवं वनदेवता।
इति संचिन्तयन्तं तं साप्यपश्यन्नृपात्मजा॥ १५.११॥
दृष्टमात्रे च सा तस्मिन्साङ्गे नव इव स्मरे।
न पुष्पाणि न चाङ्गानि सोत्का नात्मानमस्मरत्॥ १५.१२॥

इत्यन्योननवप्रेमसरसौ यावदत्र तौ।
तिष्ठतस्तावदुदभूद्धाहाहेति महारवः॥ १५.१३॥
किमेतदिति चोत्क्षिप्तकंधरं पश्यतोस्तयोः।
आयादत्रोपलब्धान्यगजगन्धोत्थया रुषा॥ १५.१४॥
भग्नालानो विनिर्गत्य मत्तो मार्गद्रुमान्रुजन्।
पतिताधोरनो धावंल्लम्बमानाङ्कुशः करी॥ १५.१५॥
ततः परिजने त्रस्तविद्रुते तां ससंभ्रमम्।
राजपुत्रीं प्रधाव्यैव दोर्भ्यामुत्क्षिप्य चैककाम्॥ १५.१६॥
अङ्गैः किंचित्कृताश्लेषां भयप्रेमत्रपाकुलाम्।
निनाय स मनःस्वामी सुदूरं गजगोचरात्॥ १५.१७॥
अथागतैः परिजनैः स्तुवद्भिस्तं द्विजोत्तमम्।
मुहुर्विवृत्य पश्यन्ती सा निन्ये निजमन्दिरम्॥ १५.१८॥
तत्र तस्थौ तमेवार्ता स्मरन्ती प्राणदायिनम्।
स्मराग्निपुटपाकेन पच्यमाना दिवानिशम्॥ १५.१९॥
सोऽप्युद्यानान्मनःस्वामी तदा तस्मादनुव्रजन्।
स्वान्तःपुरप्रविष्टां तां दृष्ट्वा सोत्को व्यचिन्तयत्॥ १५.२०॥
नैतां विनाधुना स्थातुं जीवितुं वाहमुत्सहे।
तन्मे श्रीमूलदेवोऽत्र धूर्थः सिद्धो गुरुर्गतिः॥ १५.२१॥
इति संचिन्त्य कथमप्यस्मिन्नवसिते दिने।
प्रतो ययौ गुरोस्तस्य मूलदेवस्य सोऽन्तिकम्॥ १५.२२॥
ददर्श तं च मित्रेण शशिना नित्य संगतम्।
सिद्धमायाद्भुतपथं सशरीरमिवाम्बरम्॥ १५.२३॥
न्यवेदयच्च तत्तस्मै प्रणम्य स्वमनीषितम्।
सोऽपि साधयितुं तस्य प्रतिपेदे विहस्य तत्॥ १५.२४॥
ततः स योगगुलिकां क्षिप्त्वा धूर्तपतिर्मुखे।
मूलदेवो व्यधाद्वृद्धब्राह्मणाकृतिमात्मनः॥ १५.२५॥
द्वितीयां गुलिकां दत्त्वा मुखक्षेप्यां चकार च।
सुकान्तकन्यकारूपं तं मनःस्वामिनं द्विजम्॥ १५.२६॥
तद्रूपं तं समादाय गत्वा धूर्ताधिपोऽथ सः।
तत्प्रियाजनकं भूपमास्थाने तं व्यजिज्ञपत्॥ १५.२७॥

राजन्नेकोऽस्ति मे पुत्रः कन्या दूराच्च तत्कृते।
मयैषा याचितानीता स च क्वापि गतोऽधुना॥ १५.२८॥
तमन्वेष्टुमहं यामि तदेषा रक्ष्यतां त्वया।
आनयामि सुतं यावत्त्वं हि विश्वस्य रक्षिता॥ १५.२९॥
तच्छ्रुत्वा शापभीत्या च प्रतिपद्य स भूपतिः।
सुतामानाययामास यशःकेतुः शशिप्रभाम्॥ १५.३०॥
जगाद चैतां पुत्रीमां कन्यां रक्षेः स्वमन्दिरे।
स्वपार्श्वे एव चाहारं शय्यां चास्याः प्रकल्पयेः॥ १५.३१॥
इति पित्रोक्तया निन्ये कन्यारूपस्तथेति सः।
अन्तःपुरं मनःस्वामी राजपुत्र्या तया निजम्॥ १५.३२॥
यथारुचि ततो याते मुलदेवे द्विजाकृतौ।
कन्यारूपः स तत्रासीन्मनःस्वामी प्रियान्तिके॥ १५.३३॥
दिनैश्च तां सखीप्रीतिविस्रम्भं सम्यगागताम्।
एकदा विरहक्षामां शयनीयलुठत्तनुम्॥ १५.३४॥
रात्रौ रहो राजसुतामासन्नशयनस्थितः।
कन्यारूपप्रतिच्छन्नो मनःस्वामी स पृष्टवान्॥ १५.३५॥
सखि किं पाण्डुरच्छाया क्षीयमाणा दिने दिने।
कान्तपक्षवियुक्तेव दुःखितासि शशिप्रभे॥ १५.३६॥
ब्रूहि मे को ह्यविश्वासः स्निग्धमुग्धे सखीजने।
इदानीं नैव भोक्ष्येऽहं न वदिष्यसि चेन्मम॥ १५.३७॥
तच्छ्रुत्वा सा विनिःश्वस्य शनै राजसुताब्रवीत्।
किं मे त्वय्यप्यविश्वासः शृणु तत्सखि वच्मि ते॥ १५.३८॥
एकदाहं मधूद्यानयात्रां द्रष्टुं गताभवम्।
तत्रापश्यं च सुभगं कंचिद्ब्राह्मणपुत्रकम्॥ १५.३९॥
हिममुक्तेन्दुसश्रीकं दर्शनोद्दीपितस्मरम्।
मधुमासमिवालोकक्रीडालंकृतकाननम्॥ १५.४०॥
चकोरायितुमेते च प्रवृत्ते यावदुन्मुखे।
तन्मुखेन्दुद्युतिसुधापायिनी मे विलोचने॥ १५.४१॥
तावत्स्रवन्मदजलस्तत्राकस्मान्निरर्गलः।
अकालकालमेघाभो गर्जन्नागान्महागजः॥ १५.४२॥

तत्संभ्रमात्परिजने नष्टेऽहं भयविह्वला।
उत्क्षिप्य विप्रपुत्रेण नीता तेनैव दूरतः॥ १५.४३॥
श्रीखण्डेनानुलिप्तेव सिक्तेव सुधया तथा।
अहं तदङ्गस्पर्शेन न जाने कां दशामगाम्॥ १५.४४॥
क्षनाच्च परिवारेण मिलितेनावशा ततः।
इहानीतास्मि निक्षिप्ता स्वर्गादिव भुवस्तले॥ १५.४५॥
तदाप्रभृति संकल्पैस्तैस्तैः कल्पितसंगमम्।
पश्यामि तं प्रबुद्धापि पार्श्वस्थं प्राणदं पतिम्॥ १५.४६॥
सुप्ता स्वप्ने च कुर्वाणं चाटून्यालोकयामि तम्।
त्याजयन्तं हठाल्लज्जां चुम्बनालिङ्गनाधिभिः॥ १५.४७॥
न च प्राप्नोम्यभव्या तन्नामाद्यज्ञानमोहिता।
तदेवं मां दहत्येष प्राणेशविरहानलः॥ १५.४८॥
इति वाक्सुधया तस्याः पूर्णस्वश्रवणोदरः।
सानन्दः स मनःस्वामी विप्रकन्यावपुर्धरः॥ १५.४९॥
कृतार्थमानी मत्वा तं कालमात्मप्रकाशने।
स्वरूपं प्रकटीचक्रे निष्कृष्य गुलिकां मुखात्॥ १५.५०॥
जगाद च विलोलाक्षि सोऽहमेवैष यस्त्वया।
उद्याने दर्शनक्रीतो नीतो निर्व्याजदासताम्॥ १५.५१॥
त्वत्संस्तवक्षणभ्रंशात्क्लेशं तं चाप्तवानहम्।
यस्यैषः परिणामो मे कन्यारूपग्रहोऽभवत्॥ १५.५२॥
तस्मात्सफलयैतां मे विसोढां विरहव्यथाम्।
आत्मनश्च न तन्वङ्गि क्षमतेऽतः परं स्मरः॥ १५.५३॥
एवं वदन्तं सहसा प्राणेशं तं विलोक्य सा।
आसीद्राजसुता क्षिप्रं स्नेहाश्चर्यत्रपाकुला॥ १५.५४॥
अथात्यौत्सुक्यनिर्वृत्तगान्धर्वोद्वाहयोस्तयोः।
प्रेम्णस्तस्य मतो यादृक्तादृशोऽभूद्रतोत्सवः॥ १५.५५॥
ततः सोऽत्र मनःस्वामी कृती तस्थौ द्विरूपभृत्।
दिवा सगुलिकाः कन्या रात्रावगुलिकाः पुमान्॥ १५.५६॥
गतेष्वथ दिनेष्वत्र यशःकेतोर्महीपतेः।
मृगाङ्कदत्तसंज्ञेन स्वशुर्येण निजा सुता॥ १५.५७॥

दत्ता मृगाङ्कवत्याख्या महार्हविभवोत्तरा।
द्विजातये महामन्त्रिप्रज्ञासागरसूनवे॥ १५.५८॥
तस्मिन्मातुलपुत्र्याः सा राजपुत्री शशिप्रभा।
विवाहे मातुलगृहं तज्जगाम निमन्त्रिता॥ १५.५९॥
तया सह ययौ सोऽपि कन्यकापरिवारया।
विप्रपुत्रो मनःस्वामी कान्तकन्यास्वरूपधृत्॥ १५.६०॥
तत्र तं कन्यकारूपधरं मन्त्रिसुतोऽथ सः।
दृष्ट्वा किल स्मरव्याधगाढबाणाहतोऽभवत्॥ १५.६१॥
ततो मुषितचित्तः संस्तया कपटकन्यया।
ययौ मन्त्रिसुतः शून्यं स्वगृहं स्ववधूसखः॥ १५.६२॥
तत्र तन्मुखलावन्यध्यानासक्तो जगाम सः।
तीव्ररागमहाव्यालदष्टो मोहमशङ्कितम्॥ १५.६३॥
किमेतदिति संभ्रान्ते जने तत्रोत्सवोज्झिते।
तमुपागाद्द्रुतं बुद्ध्वा स प्रज्ञासागरः पिता॥ १५.६४॥
तेन चाश्वास्यमानोऽपि पित्रा मोहात्प्रबुध्य सः।
प्रलपन्निव सोन्मादमुज्जगार मनोगतम्॥ १५.६५॥
अस्वाधीनं च तं मत्वा तत्पितर्यतिविह्वले।
तस्मिन्राजापि तद्बुद्ध्वा तत्रैव समुपाययौ॥ १५.६६॥
स तं दृष्ट्वा झटित्येव गाढाभिष्वङ्गतो गतम्।
सप्तमीं मदनावस्थां जगाद प्रकृतीर्नृपः॥ १५.६७॥
कथं ब्राह्मणनिक्षेपः कन्या सास्मै प्रदीयते।
तया विना च नियतं पश्चिमामेत्यसौ दशाम्॥ १५.६८॥
अस्मिन्नष्टे पितास्यैषो मम मन्त्री विनङ्क्ष्यति।
एतन्नाशे राज्यनाशस्तदिह ब्रूत का गतिः॥ १५.६९॥
इत्युक्तास्तेन राज्ञा ताः सर्वाः प्रकृतयोऽब्रुवन्।
राज्ञो धर्मं निजं प्राहुः प्रजानां धर्मरक्षणम्॥ १५.७०॥
मूलं तस्य विदुर्मन्त्रं स च मन्त्रिष्ववस्थितः।
मन्त्रिनाशे मूलनाशाद्रक्ष्या धर्मक्षतिर्ध्रुवम्॥ १५.७१॥
पापं च स्याद्द्विजस्यास्य ससूनोर्मन्त्रिणो वधात्।
तस्माद्रक्ष्योऽयमासन्नोऽवश्यं ते धर्मविप्लवः॥ १५.७२॥

दातव्या मन्त्रिपुत्राय विप्रन्यस्ता कुमारिका।
कालान्तरागते विप्रे क्रुद्धे प्रतिविधास्यते॥ १५.७३॥
एवमुक्तः प्रकृतिभिस्तथेति प्रत्यपद्यत।
स राजा मन्त्रिपुत्राय दातुं तां कूटकन्यकाम्॥ १५.७४॥
आनीतश्च स निश्चित्य लग्नं राजसुतागृहात्।
कन्यारूपो मनःस्वामी तं जगाद महीपतिम्॥ १५.७५॥
अन्येनान्यार्थमानीतामन्यस्मै मां ददासि चेत्।
कामं तदस्तु राजा त्वं धर्माधर्मौ तवाद्य तौ॥ १५.७६॥
अहं विवाहमिच्छामि समयेनेदृशेन तु।
एकशय्यां न नेतव्या पत्या तावदहं हठात्॥ १५.७७॥
यावत्तीर्थानि षण्मासान्परिभ्रम्य स नागतः।
एवं न चेत्कृत्तजिह्वां दन्तैर्जानीहि मां मृताम्॥ १५.७८॥
इत्युक्ते समये तेन यूना कन्यावपुर्भृता।
राज्ञा स बोधितः प्राप निर्वृत्तिं मन्त्रिपुत्रकः॥ १५.७९॥
तथेति प्रतिपद्यैतत्कृत्वोद्वाहं किलाशु तम्।
एकस्मिन्स्थापयित्वा च वासके ते सुरक्षिते॥ १५.८०॥
तां मृगाङ्कवतीमाद्यां वधूं कूटवधूं च ताम्।
जगाम तीर्थयात्रायै मूढः कान्ताप्रियेच्छया॥ १५.८१॥
स चोवास मनःस्वामी स्त्रीरूपोऽत्र तया सह।
मृगाङ्कवत्येकगृहे समानशयनासनः॥ १५.८२॥
तथा स्थितं कदाचित्तं सा मृगाङ्कवती निशि।
शय्यागृहे रहोऽवादीद्बहिःसुप्ते परिच्छदे॥ १५.८३॥
कथां कांचित्त्वमाख्याहि निद्रा नास्ति हि मे सखि।
तच्छ्रुत्वाकथयत्सोऽस्यै स्त्रीरूपस्तां कथां युवा॥ १५.८४॥
यत्रेलाख्यस्य राजर्षेः सूर्यवंशभुवः पुरा।
प्राप्तस्य गौरीशापेन स्त्रीत्वं विश्वैकमोहनम्॥ १५.८५॥
अन्योन्यदर्शनप्रीत्या देवोद्यानवनान्तरे।
अभूद्बुधेन संयोगः समभूच्च पुरूरवाः॥ १५.८६॥
तां कथां कथयित्वा च धूर्तः पुन उवाच सः।
तदेवं देवतादेशान्मन्त्रौषधवशेन वा॥ १५.८७॥

पुरुषः स्त्री कदाचित्स्यात्स्त्री वा जातु पुमान्भवेत्।
भवन्ति चैवं संयोगाः कामजा महतामपि॥ १५.८८॥
श्रुत्वैतत्तरुणी मुग्धा विवाहप्रोषितानुका।
सा मृगाङ्कवती स्माह विश्वस्ता सहवासतः॥ १५.८९॥
श्रुत्वैतां मे कथामेतदङ्गं सिमिसिमायते।
हृदयं सीदतीवेदं तदेतत्सखि किं वद॥ १५.९०॥
तच्छ्रुत्वा सोऽङ्गनारूपो विप्रः पुन उवाच ताम्।
एतानि कामचिह्नानि नन्वपूर्वाणि ते सखि॥ १५.९१॥
मयैतान्यनुभूतानि निगूहे न ह्यहं तव।
इति तेनोदितावादीत्सा मृगाङ्कवती शनैः॥ १५.९२॥
सखि प्राणसमा त्वं मे तत्कालज्ज्ञा न वच्मि किम्।
अपि पुंसः प्रवेशः स्यादुपायेन हि केनचित्॥ १५.९३॥
एवमुक्तवतीमेतां स च लब्धाशयस्तदा।
प्राह धूर्तपतेः शिष्यो यद्येवं तद्वदामि ते॥ १५.९४॥
वैष्णवोऽस्ति प्रसादो मे येनाहं स्वेच्छया निशि।
पुरुषः स्यां तदेषोऽद्य भवामि त्वत्कृते पुमान्॥ १५.९५॥
इत्युक्त्वा स मनःस्वामी निष्कृष्य गुलिकां मुखात्।
यौवनोद्दाममात्मानं तस्यै कान्तमदर्शयत्॥ १५.९६॥
ततः कथितविस्रम्भः सर्वस्वगतयन्त्रणः।
कालोचितरसः कोऽपि तयोरासीद्रतोत्सवः॥ १५.९७॥
अथ तत्र तया साकं स मन्त्रिसुतभार्यया।
तस्थौ द्विजो दिवा नारी रात्रौ च पुरुषो भवन्॥ १५.९८॥
आसन्नागमनं तं च बुद्ध्वा मन्त्रिसुतं दिनैः।
तामादाय निशि स्वैरं पलाय्य स ययौ ततः॥ १५.९९॥
एतस्मिंश्च कथासंधौ मूलदेवः स तद्गुरुः।
बुद्ध्वा तदखिलं भूत्वा भूयो वृद्धद्विजाकृतिः॥ १५.१००॥
शशिनानुगतः सख्या तरुणद्विजरूपिणा।
आगत्य तं यशःकेतुं प्रह्वो राजानमब्रवीत्॥ १५.१०१॥
आनीतोऽयं मया पुत्रो देहि मे तां स्नुषामिति।
ततः संमन्त्र्य स नृपः शापभीतस्तमभ्यधात्॥ १५.१०२॥

ब्रह्मन्न जाने क्व गता सा स्नुषा ते क्षमस्व तत्।
अपराधात्सुतस्यार्थे ददामि स्वसुतां तव॥ १५.१०३॥
इत्युक्त्वा धूर्तराजं तं कृतकक्रोधनिष्ठुरम्।
विब्रुवाणं जरद्विप्ररूपं प्रार्थ्य स भूपतिः॥ १५.१०४॥
तत्सख्ये कृततत्पुत्रव्यपदेशाय तां ददौ।
तनयां शशिने तस्मै यथाविधि शशिप्रभाम्॥ १५.१०५॥
ततः स मूलदेवस्तौ यथाभूतौ वधूवरौ।
आदाय स्वास्पदं प्रायाद्राजार्थेष्वकृतस्पृहः॥ १५.१०६॥
तत्र तस्मिंश्च मिलिते मनःस्वामीन्यभून्महान्।
विवादो मूलदेवाग्रे शशिनस्तस्य चोभयोः॥ १५.१०७॥
मनःस्वाम्यब्रवीदेषा दीयतां मे शशिप्रभा।
कन्यैव हि मयोढूडा प्रागसौ गुर्वनुग्रहात्॥ १५.१०८॥
शशी जगाद कोऽस्यास्त्वं मूर्ख दारा इयं मम।
अग्निसाक्षिकमेषा हि पित्रा मे प्रतिपादिता॥ १५.१०९॥
एवं मायाबलप्राप्तराजपुत्रीनिमित्ततः।
विवादासक्तयोर्नासीत्परिच्छेदस्तयोर्द्वयोः॥ १५.११०॥
तद्राजंस्त्वं मम ब्रूहि तावत्कस्योपपद्यते।
भार्या सा संशयं छिन्धि पूर्वोक्तः समयोऽस्ति ते॥ १५.१११॥
इति वेतालतः श्रुत्वा तस्मात्स्कन्धाग्रवर्तिनः।
स त्रिविक्रमसेनस्तं नृपतिः प्रत्यभाषत॥ १५.११२॥
मन्ये शशिन एवासौ भार्या न्याय्या नृपात्मजा।
यस्मै प्रदत्ता प्रकटं पित्रा धर्म्येण वर्त्मना॥ १५.११३॥
मनःस्वामी तु तां भेजे चौर्याद्गान्धर्वधर्मतः।
चौरस्य तु परस्वेषु स्वत्वं न्याय्यं न जातु चित्॥ १५.११४॥
इति तस्य वचो निशम्य राज्ञो वेतालः स ययौ पुनस्तदेव।
सहसैव तदंसतः स्वधाम क्षितिपः सोऽपि तमन्वियाय तूर्णम्॥ १५.११५॥

# षोडशो वेतालः

अथ गत्वा पुनः स्कन्धे वेतालं शिंशपाद्रुमात्।
स त्रिविक्रमसेनस्तमादायोदचलत्ततः॥ १६.१॥
आगच्छन्तं च तं भूपं स वेतालोऽब्रवीत्पुनः।
राजञ्श्रृणु कथामेकामुदारां कथयामि ते॥ १६.२॥
अस्तीह हिमवान्नाम नगेन्द्रः सर्वरत्नभूः।
यो गौरीगङ्गयोस्तुल्यः प्रभवो हरकान्तयोः॥ १६.३॥
शूरासंस्पृष्टपृष्ठश्च यो मध्ये कुलभूभृताम्।
अभिमानोन्नतः सत्यं गीयते भुवनत्रये॥ १६.४॥
तस्यास्ति सानुन्यन्वर्थं तत्काञ्चनपुरं पुरम्।
न्यासीकृतमिवार्केण रश्मिवृन्दं विभाति यत्॥ १६.५॥
जीमूतकेतुरित्यासीत्तस्मिन्पुरवरे पुरा।
विद्याधरेश्वरः श्रीमान्मेराविव शतक्रतुः॥ १६.६॥
तस्यासीत्स्वगृहोद्याने कल्पवृक्षोऽन्वयागतः।
यथार्थनामा प्रथितो यो मनोरथदायकः॥ १६.७॥
तं प्रार्थ्य देवतात्मानं स राजा तत्प्रसादतः।
प्राप जातिस्मरं पुत्रं बोधिसत्त्वांशसंभवम्॥ १६.८॥
दानवीरं महासत्त्वं सर्वभूतानुकम्पिनम्।
गुरुशुश्रूषणपरं नाम्ना जीमूतवाहनम्॥ १६.९॥
संप्राप्तयौवनं तं च यौवराज्येऽभिषिक्तवान्।
तनयं प्रेरितः सद्भिस्तद्गुणैः सचिवैश्च सः॥ १६.१०॥
यौवराज्यस्थितश्चैषो जातु जीमूतवाहनः।
हितैषिभिरुपागत्य जगदे पितृमन्त्रिभिः॥ १६.११॥
देव कल्पतरुर्योऽयमस्ति वः सर्वकामदः।
अधृष्यः सर्वभूतानां सैष पूज्यः सदा तव॥ १६.१२॥

नास्मिन्सति हि शक्रोऽपि बाधेतास्मान्कुतोऽपरः।
एतच्छ्रुत्वा स जीमूतवाहनोऽन्तरचिन्तयत्॥ १६.१३॥
अहो बतेदृशमिमं संप्राप्यामरपादपम्।
नासादितं किमप्यस्मात्पूर्वैर्नस्तादृशं फलम्॥ १६.१४॥
केवलं कैश्चिदप्यर्थैरर्थितैः कृपणोचितैः।
आत्मा चैषो महात्मा च नीतौ द्वावपि लाघवम्॥ १६.१५॥
तदहं साधयीष्यामि काममस्मान्मनोगतम्।
इति निश्चित्य स ययौ महासत्त्वोऽन्तिकं पितुः॥ १६.१६॥
तत्र संविहिताशेषशुश्रूषापरितोषितम्।
सुखासीनं तमेकान्ते पितरं स व्यजिज्ञपत्॥ १६.१७॥
तत त्वमेव जानासि यदेतस्मिन्भवाम्बुधौ।
आशरीरमिदं सर्वं वीचिविभ्रमचञ्चलम्॥ १६.१८॥
विशेषेनाचिरस्थायिप्रकाशप्रविलायिनी।
संध्या विद्युच्च लक्ष्मीश्च दृष्टा कुत्र कदा स्थिरा॥ १६.१९॥
एकः परोपकारस्तु संसारेऽस्मिन्ननश्वरः।
यो धर्मयशसी सूते युगान्तशतसाक्षिणी॥ १६.२०॥
तत्तात क्षणिकेष्वेषु भोगेष्वस्माभिरीदृशः।
एष कल्पतरुः कस्य कृते मोघोऽभिरक्ष्यते॥ १६.२१॥
यैर्वा मम ममेत्येवमाग्रहेनैष रक्षितः।
पूर्वैस्ते कुत्र कुत्रायं तेषां कश्चैष कोऽस्य वा॥ १६.२२॥
तस्मात्परोपकारैकफलसिद्धै त्वदाज्ञया।
तातैनं विनियुञ्जेऽहं कामदं कल्पपादपम्॥ १६.२३॥
एवमस्त्विति पित्रा च दत्तानुज्ञोऽथ तेन सः।
जीमूतवाहनो गत्वा कल्पद्रुममुवाच तम्॥ १६.२४॥
अभीष्टाः पूरिताः कामाः पूर्वेषां देव नस्त्वया।
तन्ममैकमिमं काममनन्यं परिपूरय॥ १६.२५॥
अदरिद्रां यथा पृथ्वीमिमां द्रक्ष्ये तथा कुरु।
भद्रं ते व्रज दत्तोऽसि लोकायार्थार्थिने मया॥ १६.२६॥
इत्युक्तवति जीमूतवाहने रचिताञ्जलौ।
त्यक्तस्त्वयैषो जातोऽस्मीत्युदभूद्वाक्तरोस्ततः॥ १६.२७॥

क्षणाच्चोत्पत्य स दिवं कल्पवृक्षस्तथा वसु।
ववर्ष भुवि नैवासीत्कोऽप्यस्यां दुर्गतो यथा॥ १६.२८॥
ततस्तस्य तया तीव्रसर्वसत्त्वानुकम्पया।
जीमूतवाहनस्यात्र त्रैलोक्ये पप्रथे यशः॥ १६.२९॥
तेन तद्गोत्रजाः सर्वे मात्सर्यादसहिष्णवः।
तं लोकसात्कृतार्तिघ्नकल्पवृक्षविनाकृतम्॥ १६.३०॥
जेयं सपितृकं मत्वा संभूय कृतनिश्चयाः।
युद्धाय समनह्यन्त तद्राज्यापजिहीर्षया॥ १६.३१॥
तद्दृष्ट्वा प्राह पितरं स्वं स जीमूतवाहनः।
तात कस्यापरस्यास्ति शक्तिस्त्वयि धृतायुधे॥ १६.३२॥
किं त्वस्य पापकस्यार्थे शरीरस्य विनाशिनः।
हत्वा बन्धूनकृपनो राज्यं को नाम वाञ्छति॥ १६.३३॥
तत्किं राज्येन नः कार्यं गत्वान्यत्र क्वचिद्वयम्।
धर्ममेव चरिष्यामो लोकद्वयसुखावहम्॥ १६.३४॥
मोदन्तां कृपणा एते दायादा राज्यलोलुपाः।
इत्युक्तवन्तं जीमूतकेतुस्तं स पिताब्रवीत्॥ १६.३५॥
अहं त्वदर्थमिच्छामि राज्यं पुत्र त्वमेव चेत्।
तज्जहासि कृपाविष्टस्तन्मे वृद्धस्य तेन किम्॥ १६.३६॥
एवं कृताभ्यनुज्ञेन पित्रा मात्रा च सोऽन्वितः।
मलयाद्रिमगात्त्यक्तराज्यो जीमूतवाहनः॥ १६.३७॥
तत्र चन्दनसंछन्नवहन्निर्झरकन्दरे।
शुश्रूषमाणः पितरं स तस्थौ कल्पिताश्रमः॥ १६.३८॥
मित्रं चास्यात्र संपेदे मित्रावसुरिति श्रुतः।
विश्वावसोः सुतः सिद्धराजस्यैतन्निवासिनः॥ १६.३९॥
एकदा चात्र स भ्राम्यन्विवेशोपवनस्थितम्।
द्रष्टुमायतनं देव्या गौर्या जीमूतवाहनः॥ १६.४०॥
तत्रोपवीणयन्तीं च ददर्श वरकन्यकाम्।
सखीजनान्वितां शैलतनयाराधनोद्यताम्॥ १६.४१॥
आकर्ण्यमानसंगीतमञ्जुवीणारवां मृगैः।
दृष्टलोचनलावन्यलज्जितैरिव निश्चलैः॥ १६.४२॥

दधता तारकं कृष्णमर्जुनेन स्वचक्षुषा।
पाण्डवीयामिव चमूं कर्णमूलं विविक्षतीम्॥ १६.४३॥
परःपरविमर्देन मुखेन्दोरिव दर्शनम्।
अतृप्ताविव वाञ्छन्तौ बिभ्रन्तीं संमुखौ स्तनौ॥ १६.४४॥
धातुर्घटयतो मुष्टिग्रहेणेव निपीडिते।
वलीमग्नाङ्गुलीमुद्रे मध्ये क्षाममनोरमाम्॥ १६.४५॥
दृष्टया च तया सद्यः सोऽभूज्जीमूतवाहनः।
तन्व्या मुषितचित्तोऽन्तो दृष्टिमार्गप्रविष्टया॥ १६.४६॥
सापि तं भूषितोद्यानं दृष्ट्वोत्कण्ठाविकारदम्।
कामाङ्गदाहवैराग्याद्वनं मधुमिवाश्रितम्॥ १६.४७॥
तथानुरागविवशा भेजे कन्या विहस्तताम्।
यथा सखीव वीणास्या व्याकुलालापतां ययौ॥ १६.४८॥
ततः स पप्रच्छ सखीं तस्या जीमूतवाहनः।
किं धन्यं नाम सख्यास्ते को वंशोऽलंकृतोऽनया॥ १६.४९॥
तच्छ्रुत्वा सा सखी प्राह नाम्ना मलयवत्यसौ।
मित्रावसुस्वसा सिद्धराजविश्वावसोः सुता॥ १६.५०॥
एवमुक्त्वा सहृदया सा तं जीमूतवाहनम्।
नामान्वयौ च पृष्ट्वास्य मुनिपुत्रं सहागतम्॥ १६.५१॥
तां ब्रवीति स्म मलयवतीं स्मितमिताक्षरम्।
सखि विद्याधरेन्द्रस्य नास्यातिथ्यं करोषि किम्॥ १६.५२॥
जगत्पूज्योऽतिथिर्ह्येष प्राप्त इत्युदिते तया।
साभूद्विद्याधरसुता तूष्णीं लज्जानतानना॥ १६.५३॥
लज्जावतीयं मत्तोऽर्चा गृह्यतामिति वादिनी।
एकाथ तत्सखी तस्मै साध्र्यां मालामुपानयत्॥ १६.५४॥
स चादायैव जीमूतवाहनः प्रेमनिर्भरः।
कण्ठे मलयवत्यास्तां मालां तस्याः समर्पयत्॥ १६.५५॥
सापि तिर्यक्प्रसृतया पश्यन्ती स्निग्धया दृशा।
नीलोत्पलमयीं मालामिव तस्मिन्न्यवेशयत्॥ १६.५६॥
इत्यन्योनकृताशब्दस्वयंवरविशेषयोः।
तयोरेत्य जगादैका चेटी तां सिद्धकन्यकाम्॥ १६.५७॥

जननी राजपुत्रि त्वां स्मरत्यागच्छ माचिरम्।
तच्छ्रुत्वाकृष्य कामेषुकीलितामिव कृच्छ्रतः॥ १६.५८॥
सोत्कां प्रियमुखाद्दृष्टिं कथंचित्सा ययौ गृहम्।
जीमूतवाहनोऽप्यागात्तन्नतात्मा स्वमाश्रमम्॥ १६.५९॥
साथ स्वां जननीं दृष्ट्वा प्राणेशविरहातुरा।
गत्वा मलयवत्याशु पपात शयनीयके॥ १६.६०॥
अथान्तर्गतकामाग्निधूमेनेवाविलेक्षणा।
अश्रुधारां प्रमुञ्चन्ती संतापक्वथिताङ्गका॥ १६.६१॥
सखीभिश्चन्दनैर्लिप्ता वीजिता चाब्जिनीदलैः।
रतिं न भेजे शयने नाङ्के सख्या न भूतले॥ १६.६२॥
गतेऽथ वासरे क्वापि रक्तया सह संध्यया।
हसत्प्राचीमुखं चन्द्रे समाक्रम्य च चुम्बति॥ १६.६३॥
स्मरेण प्रेर्यमाणापि दूतीसंप्रेषणादि सा।
लज्जया नाशकत्कर्तुं जीवितस्पृहयोज्झिता॥ १६.६४॥
निनाय च निशामिन्दुविषमामब्जिनीव ताम्।
बद्धमोहालिपटले हृदि संकोचमेत्य सा॥ १६.६५॥
तावच्च तद्वियोगार्तः सोऽपि जीमूतवाहनः।
शयनस्थोऽपि पतितो हस्ते कुसुमधन्वनः॥ १६.६६॥
नूतनोद्भिन्नरागोऽपि प्रोन्मिषत्पाण्डुरच्छविः।
ह्रीमूकोऽपि वदन्पीडां कामजामनयन्निशाम्॥ १६.६७॥
प्रातश्चात्युत्सुको भूयस्तद्गौर्यायतनं ययौ।
यत्र दृष्टाभवत्तेन सा सिद्धाधिपपुत्रिका॥ १६.६८॥
तत्र तेन स मित्रेण मुनिपुत्रेण पृष्ठतः।
आगत्याश्वास्यते यावन्मदनानलविह्वलः॥ १६.६९॥
तावत्तत्रैव साप्यागान्निर्गत्यैकैव निर्जने।
गुप्तं मलयवत्यात्मत्यागाय विरहासहा॥ १६.७०॥
अलक्षयन्ती कान्तं स्वं पादपान्तरितं च सा।
उदश्रुलोचना बाला देवीं गौरीं व्यजिज्ञपत्॥ १६.७१॥
त्वद्भक्त्या देवि संवृत्तो नास्मिञ्जन्मनि चेन्मम।
जीमूतवाहनो भर्ता तद्भूयात्सोऽन्यजन्मनि॥ १६.७२॥

इत्युक्त्वा रचयामास स्वोत्तरीयेण तत्क्षणम्।
अशोकतरुशाखायां पाशं सा गिरिजाग्रतः॥ १६.७३॥
हा नाथ विश्वविख्यातकरुणेनापि न त्वया।
कथमस्मि परित्राता देव जीमूतवाहन॥ १६.७४॥
एवमुक्त्वा गले यावत्सा तं पाशं नियच्छति।
उच्चचार दिवस्तावद्भारती देव्युदीरिता॥ १६.७५॥
पुत्रि मा साहसं कार्षीश्चक्रवर्ती पतिस्तव।
विद्याधरेन्द्रो जीमूतवाहनो हि भविष्यति॥ १६.७६॥
इत्युक्तवत्यां देव्यां स श्रुत्वैव सवयस्यकः।
जीमूतवाहनो हृष्टां प्रियामुपजगाम ताम्॥ १६.७७॥
सैष देव्या वरः पश्य वितीर्णः सत्य एव ते।
इति जल्पति बालां तां तन्मित्रे मुनिपुत्रके॥ १६.७८॥
जीमूतवाहनस्तत्तद्ब्रुवन्प्रणयपेशलम्।
स्वहस्तेनैव तं तस्याः कण्ठात्पाशमपानयत्॥ १६.७९॥
ततोऽकस्मात्सुधावर्षमिव मन्वानयोस्तयोः।
भुवं मलयवत्यां च लिखन्त्यां ह्रीतया दृशा॥ १६.८०॥
चिन्वानागत्य सहसा सखी हृष्टा जगाद ताम्।
सखि कल्याणिनी दिष्ट्या वर्धसेऽभीष्टसिद्धितः॥ १६.८१॥
अद्यैव हि महाराजस्तव विश्वावसुः पिता।
कुमारमित्रावसुना विज्ञप्तः संनिधौ मम॥ १६.८२॥
इहागतो जगन्मान्यस्तात कल्पतरुप्रदः।
विद्याधरेन्द्रतनयो योऽयं जीमूतवाहनः॥ १६.८३॥
अतिथित्वात्स नः पूज्यो वरश्चान्यो न तादृशः।
तस्मान्मलयवत्यासौ कन्यारत्नेन पूज्यताम्॥ १६.८४॥
तथेति श्रद्धिते राज्ञा भ्राता मित्रावसुः स ते।
तादर्थ्येन महाभागस्यास्याश्रमपदं गतः॥ १६.८५॥
जाने सद्यश्च भावी ते विवाहस्तत्स्वमन्दिरम्।
आयाहि यातु चैषोऽपि महाभागः स्वमास्पदम्॥ १६.८६॥
इत्युक्ता सा तया सख्या राजपुत्री शनैस्ततः।
ययुः सहर्षा सोत्का च मुहुर्वलितकंधरा॥ १६.८७॥

जीमूतवाहनोऽप्याशु गत्वा स्वाश्रममागतात्।
मित्रावसोर्यथाभीष्टं कार्यं श्रुत्वाभिनन्द्य च॥ १६.८८॥
जातिस्मरः समाचख्यौ तस्मै स्वं पूर्वजन्म सः।
यत्र मित्रं स तस्यासीत्सा च भार्यैव तत्स्वसा॥ १६.८९॥
ततो मित्रावसुः प्रीतस्तत्पित्रोः परितुष्यतोः।
आवेद्य गत्वा पितरौ कृतार्थः स्वावनन्दयत्॥ १६.९०॥
निनाय च तदैव स्वान्गृहाञ्जीमूतवाहनम्।
चक्रे चोत्सवसंभारं स्वसिद्ध्युचितवैभवम्॥ १६.९१॥
तस्मिन्नेव च धन्येऽह्नि तस्य विद्याधरप्रभोः।
स्वसुर्मलयवत्याश्च विवाहं समपादयन्॥ १६.९२॥
ततो नवोढया साकं तया जीमूतवाहनः।
तस्थौ मलयवत्या स तत्र सिद्धमनोरथः॥ १६.९३॥
एकदा कौतुकाच्चात्र स मित्रावसुना सह।
मलयाद्रौ भ्रमन्नब्धेर्वेलावनमुपेयिवान्॥ १६.९४॥
तत्रास्थिराशीन्सुबहून्दृष्ट्वा मित्रावसुं स तम्।
केषामेतेऽस्थिसंघाताः प्राणिनामिति पृष्टवान्॥ १६.९५॥
ततो मित्रावसुः श्यालस्तं कारुणिकमब्रवीत्।
शृणु वृत्तान्तमत्रेमं संक्षेपाद्वर्णयामि ते॥ १६.९६॥
नागमाता पुरा कद्रूर्विनतां तार्क्ष्यमातरम्।
निनाय किल दासत्वं सव्याजपणनिर्जिताम्॥ १६.९७॥
तेन वैरेण गरुडस्तामुन्मोच्यापि मातरम्।
बली भक्षयितुं नागान्कद्रूपुत्रान्प्रचक्रमे॥ १६.९८॥
सदा प्रविश्य पातालं सोऽथ कांश्चिज्जघास तान्।
कांश्चिन्ममर्द केचित्तु स्वयं त्रासाद्विपेदिरे॥ १६.९९॥
तद्दृष्ट्वैकपदे सर्वक्षयमाशङ्क्य नागराट्।
वासुकिः प्रार्थनापूर्वं तार्क्ष्यस्य समयं व्यधात्॥ १६.१००॥
एकमेकमहं नागमाहारार्थं खगेन्द्र ते।
प्रत्यहं प्रेषयाम्यत्र पुलिने दक्षिणोदधेः॥ १६.१०१॥
त्वया तु न प्रवेष्टव्यं पातालेऽस्मिन्कथंचन।
को हि स्वार्थो विनष्टेषु नागेष्वेकपदे तव॥ १६.१०२॥

इत्युक्ते नागराजेन समयं प्रत्यपद्यत।
स्वार्थदर्शी तथेत्येव गरुडो गुरुविक्रमः॥ १६.१०३॥
तदाप्रभृति चैकैकं नागं भुङ्क्ते दिने दिने।
वासुकिप्रेषितं सोऽत्र खगेन्द्रः पुलिनेऽम्बुधेः॥ १६.१०४॥
अतस्तद्भक्ष्यमाणानां नागनामस्थिसंचयाः।
एतेऽत्र गिरिशृङ्गाभा वृद्धिं कालक्रमाद्गताः॥ १६.१०५॥
इति मित्रावसोर्वक्त्रात्सान्तर्दुःखो निशम्य सः।
निजगाद दयाधैर्यनिधिर्जीमूतवाहनः॥ १६.१०६॥
शोच्यः स वासुकी राजा यः स्वहस्तेन विद्विषे।
उपहारीकरोति स्वाः प्रजाः क्लीबो दिने दिने॥ १६.१०७॥
धृताननसहस्रः सन्नेकेनाप्याननेन सः।
मामादौ भुङ्क्ष्व तार्क्ष्येति भाषितुं नाशकत्कथम्॥ १६.१०८॥
कथं चाभ्यर्थयामास निःसत्त्वः स्वकुलक्षयम्।
तार्क्ष्यं नागाङ्गनाक्रन्दनित्याकर्णननिर्घृणः॥ १६.१०९॥
तार्क्ष्योऽपि काश्यपिर्वीरः कृष्णाधिष्ठानपावनः।
ईदृशं कुरुते पापमहो मोहस्य गाढता॥ १६.११०॥
इत्युक्त्वा स महासत्त्वो हृदि चक्रे मनोरथम्।
अप्यसारेण देहेन सारमत्राप्नुयामहम्॥ १६.१११॥
एकस्याप्यद्य नागस्य कुर्यां जीवितरक्षणम्।
अबान्धवस्य भीतस्य दत्त्वात्मानं गरुत्मते॥ १६.११२॥
इति संचिन्तयत्येव तस्मिञ्जीमूतवाहने।
मित्रावसोः पितुः पार्श्वात्क्षत्ताह्वानार्थमाययौ॥ १६.११३॥
व्रज त्वमहमेष्यामि पश्चादिति ततश्च तम्।
मित्रावसुं स जीमूतवाहनो व्यसृजद्गृहम्॥ १६.११४॥
गते तस्मिन्स चात्रैको वाञ्छितार्थोन्मुखो भ्रमन्।
कृपालुरश्रृणोद्दूरात्करुणं रुदितध्वनिम्॥ १६.११५॥
गत्वा ददर्श चोत्तुङ्गशिलातलसमीपगम्।
युवानमेकं पुरुषं दुःखितं सुन्दराकृतिम्॥ १६.११६॥
पुंसा राजभटेनेव त्यक्तमानीय तत्क्षणम्।
निवर्तयन्तं रुदतीं वृद्धां सानुनयं स्त्रियम्॥ १६.११७॥

कोऽयं स्यादिति यावच्च जिज्ञासुः सोऽत्र तिष्ठति।
करुणाकुलितश्छन्नः श्रृण्वञ्जीमूतवाहनः ॥ १६.११८॥
तावत्सा तत्र वृद्धा स्त्री दुःखभारातिपीडिता।
प्रावर्तत युवानं तं दृष्ट्वा दृष्ट्वानुशोचितुम् ॥ १६.११९॥
हा शङ्खचूड हा दुःखशतसंप्राप्त हा गुणिन्।
कुलैकतन्तो हा पुत्र क्व त्वां द्रक्ष्याम्यहं पुनः ॥ १६.१२०॥
वत्स त्वन्मुखचन्द्रेऽस्मिन्गतेऽस्तं स पिता तव।
सोकान्धकारपतितः कथं वृद्धो भविष्यति ॥ १६.१२१॥
अथार्ककरसंस्पर्शादङ्गं दूयेत यत्तव।
कथं शक्ष्यति तत्सोढुं तार्क्ष्यभक्षणजां रुजम् ॥ १६.१२२॥
विस्तीर्णे नागलोकेऽपि धात्रा नागाधिपेन च।
लब्धस्त्वं किमभव्याया विचित्यैकसुतो मम ॥ १६.१२३॥
इति तां विलपन्तीं च स युवा तनयोऽब्रवीत्।
दुःखार्तमपि मामम्ब किं दुःखयसि हा भृशम् ॥ १६.१२४॥
निवर्तस्व गृहानेष प्रणामः पश्चिमस्तव।
इहागमनवेला हि भवेज्जातु गरुत्मतः ॥ १६.१२५॥
तच्छ्रुत्वा हा हतास्मीह को मे पास्यति पुत्रकम्।
इत चक्रन्द सा वृद्धा दिक्षु क्षिप्तार्तलोचना ॥ १६.१२६॥
तावच्च बोधिसत्त्वांशः स तज्जीमूतवाहनः।
श्रुत्वा दृष्ट्वा च कृपया गाढाक्रान्तो व्यचिन्तयत् ॥ १६.१२७॥
हन्तायं शङ्खचूडाख्यो नागो वासुकिना बत।
आहारहेतोस्तार्क्ष्यस्य तपस्वी प्रेषितोऽधुना ॥ १६.१२८॥
इयं चैतस्य जननी स्नेहेनेहान्वगागता।
एतदेकसुता वृद्धा दुःखदीनप्रलापिनी ॥ १६.१२९॥
तदेनमेकमार्तं चेद्देहेनैकान्तनाशिना।
रक्षामि नामुना नागं तन्मे धिग्जन्म निःफलम् ॥ १६.१३०॥
इत्यालोच्योपगम्यैव मुदा जीमूतवाहनः।
वृद्धामुवाच तां मातः पुत्रं रक्षाम्यहं तव ॥ १६.१३१॥
तच्छ्रुत्वा भावितभया वृद्धा गरुडशङ्किनी।
संत्रस्ता तार्क्ष्य मां भुङ्क्ष्व मां भुङ्क्ष्वेति जगाद सा ॥ १६.१३२॥

शङ्खचूडस्ततोऽवादीन्नैषस्ताक्ष्योऽम्ब मा त्रसीः।
कायं चन्द्र इवाह्लादी क्व स तार्क्ष्यो भयंकरः॥ १६.१३३॥
इत्युक्ते शङ्खचूडेन प्राह जीमूतवाहनः।
विद्याधरोऽहमायातो रक्षितुं सुतमम्ब ते॥ १६.१३४॥
दास्यामि हि शरीरं स्वं वस्त्रच्छन्नं गरुत्मते।
क्षुधिताय प्रयाहि त्वमादायैनं सुतं गृहम्॥ १६.१३५॥
तच्छ्रुत्वा साब्रवीद्वृद्धा मैवं त्वं ह्यधिको मम।
पुत्रो यस्येदृशे काले कृपास्मास्वियमीदृशी॥ १६.१३६॥
एतच्छ्रुत्वा स जीमूतवाहनः पुनरब्रवीत्।
न मे मनोरथस्यास्य भङ्गं कर्तुमिहार्हथ॥ १६.१३७॥
ग्रहादेवं ब्रुवाणं च शङ्खचूडो जगाद तम्।
दर्शितैव महासत्त्व त्वया सत्यं कृपालुता॥ १६.१३८॥
न त्वहं त्वच्छरीरेण रक्ष्यामि स्वशरीरकम्।
रत्नव्ययेन पाषाणं को हि रक्षितुमर्हति॥ १६.१३९॥
मादृशैस्तु जगत्पूर्णं स्वात्ममात्रानुकम्पिभिः।
अनुकम्प्यं जगद्येषां विरलास्ते भवादृशाः॥ १६.१४०॥
न चाहं मलिनीकर्तुं शङ्खपालकुलं शुचि।
कलङ्क इव तीक्ष्णांशुबिम्बं शक्ष्यामि सन्मते॥ १६.१४१॥
इति तं प्रतिषिध्यैव शङ्खचूडः स्वमातरम्।
जगादाम्ब निवर्तस्व कान्ताराद्दुर्गमादितः॥ १६.१४२॥
न पश्यसि किमत्रैतन्नागासृक्कर्दमोक्षितम्।
कृतान्तलीलापर्यङ्करौद्रं वध्यशिलातलम्॥ १६.१४३॥
अहं चाब्धितटे गत्वा नत्वा गोकर्णमीश्वरम्।
आगच्छामि द्रुतं यावन्नायाति गरुडोऽत्र सः॥ १६.१४४॥
इत्युक्त्वा कृपणाक्रन्दां प्रणम्यापृच्छ्य मातरम्।
स गोकर्णप्रणामार्थं शङ्खचूडो ययौ ततः॥ १६.१४५॥
अस्मिंश्चेदन्तरे प्राप्तस्तार्क्ष्यः सिद्धो ममेप्सितः।
परार्थ इति जीमूतवाहनोऽप्यकरोद्धृदि॥ १६.१४६॥
तावच्चासन्नपक्षीन्द्रपक्षानिलचलांस्तरून्।
विलोक्यात्र स मा मेति निवारणपरानिव॥ १६.१४७॥

मत्वा गरुडवेलां च प्राप्तां जीमूतवाहनः।
परार्थप्राणदो वध्यशिलामध्यारुरोह ताम्॥ १६.१४८॥
पवनाघूर्णिते चाब्धौ स्फुरद्रत्नप्रभादृशा।
तं सत्त्वातिशयं तस्य पश्यतीव सविस्मयम्॥ १६.१४९॥
आगत्याच्छादितनभा निपत्यैतच्छिलातलात्।
चञ्च्वा गरुत्मानाहत्य महासत्त्वं जहार तम्॥ १६.१५०॥
स्रुतासृग्धारमुत्खातशिरोरत्नं च तं जवात्।
नीत्वा भक्षयितुं शृङ्गे मलयाद्रेः प्रचक्रमे॥ १६.१५१॥
एवमेव परार्थाय देहः स्यात्प्रतिजन्म मे।
मा भूतां स्वर्गमोक्षौ तु परोपकृतिवर्जितौ॥ १६.१५२॥
इति ताक्ष्र्याद्यमानस्य तस्यानुध्यायतस्तदा।
विद्याधरेन्दोरपतत्पुष्पवृष्टिर्नभोतलात्॥ १६.१५३॥
अत्रान्तरे स तद्रक्तधारास्रवशिरोमणिः।
तस्या मलयवत्याश्च तत्पत्न्याः प्रापतत्पुरः॥ १६.१५४॥
सा तद्दृष्ट्वा परिज्ञाय चूडारत्नं सुविह्वला।
अन्तिकस्था श्वशुरयोस्ताभ्यां साश्रुरदर्शयत्॥ १६.१५५॥
तौ च जायापती सूनोः शिरोरत्नं विलोक्य तम्।
किमेतदिति संभ्रान्तौ सहसैव बभूवतुः॥ १६.१५६॥
ततः स्वविद्यानुध्यानाद्यथावृत्तमवेत्य तत्।
राजा जीमूतकेतुः सा राज्ञी कनकवत्यपि॥ १६.१५७॥
वध्वा मलयवत्या तौ प्रावर्तेतां सह द्रुतम्।
गन्तुं तत्रैव तौ यत्र ताक्ष्र्यजीमूतवाहनौ॥ १६.१५८॥
तावत्स शङ्खचूडोऽत्र नत्वा गोकर्णमागतः।
ददर्श रुधिरार्द्रं तद्विग्नो वध्यशिलातलम्॥ १६.१५९॥
हा हतोऽस्मि महापापो ध्रुवं तेन महात्मना।
आत्मा गरुत्मते दत्तो मत्कृते सुकृपालुना॥ १६.१६०॥
तदन्विष्यामि नीतः स क्षणेऽस्मिन्क्वाहिवैरिणा।
मज्जेयं नायशःपङ्के जीवन्तं चेत्तमाप्नुयाम्॥ १६.१६१॥
इत्युदश्रुर्वदन्सोऽथ साधुर्दृष्ट्वा निरन्तराम्।
पतितां भुवि तद्रक्तधारामनुसरन्ययौ॥ १६.१६२॥

अत्रान्तरे भक्षयंस्तं दृष्ट्वा जीमूतवाहनम्।
हृष्टं विरम्य गरुडश्चिन्तयामास तत्क्षणम्॥ १६.१६३॥
अहो अपूर्वः कोऽप्येष भक्ष्यमाणोऽपि यो मया।
प्रहृष्यति महासत्त्वो न तु प्राणैर्वियुज्यते॥ १६.१६४॥
बिभर्ति लुप्तशेषे च गात्रे रोमाञ्चकञ्चुकम्।
किं चोपकारिणीवास्य मयि दृष्टिः प्रसीदति॥ १६.१६५॥
तन्नैष नागः कोऽप्येष साधुः पृच्छामि नाद्म्यमुम्।
इति तार्क्ष्यं विमृश्यन्तं प्राह जीमूतवाहनः॥ १६.१६६॥
पक्षीन्द्र किं निवृत्तोऽसि न हि मे मांसशोणितम्।
देहे नास्ति न चाद्यापि परितृप्तोऽसि भुङ्क्ष्व तत्॥ १६.१६७॥
एतच्छ्रुत्वातिसाश्चर्यस्तं पप्रच्छ स पक्षिराट्।
नागो नैवासि तद्ब्रूहि महात्मन्को भवानिति॥ १६.१६८॥
नाग एवास्मि कोऽयं ते प्रश्नः प्रकृतमाचर।
प्रस्तुतार्थविरुद्धं हि कोऽभिदध्यादबालिशः॥ १६.१६९॥
एवं प्रतिवदत्येव तार्क्ष्यं जीमूतवाहने।
प्राप्तः स शङ्खचूडोऽत्र दूरादेवाभ्यभाषत॥ १६.१७०॥
मा मा कृथा महापापं साहसं विनतात्मज।
कोऽयं भ्रमस्ते न ह्येष नागो नागोऽहमेष ते॥ १६.१७१॥
इत्युक्त्वा द्रुतमागत्य मध्ये स्थित्वा तयोर्द्वयोः।
दृष्ट्वा च तार्क्ष्यं विभ्रान्तं शङ्खचूडोऽब्रवीत्पुनः॥ १६.१७२॥
किं भ्राम्यसि फणाः किं मे जिह्वे द्वे च न पश्यसि।
विद्याधरस्य किं चास्य सौम्यां पश्यसि नाकृतिम्॥ १६.१७३॥
शङ्खचूडे वदत्येवं भार्या च पितरौ च तौ।
जीमूतवाहनस्यात्र सर्वे सत्वरमाययुः॥ १६.१७४॥
विलुप्ताङ्गं च तं दृष्ट्वा पितरौ तस्य तत्क्षणम्।
चक्रन्दतुस्तौ हा पुत्र हा हा जीमूतवाहन॥ १६.१७५॥
हा कारुणिक हा वत्स परार्थप्रत्तजीवित।
हा कथं वैनतेयेदमविमृश्य कृतं त्वया॥ १६.१७६॥
एतच्छ्रुत्वैव तार्क्ष्योऽत्र सोऽनुतप्तो व्यचिन्तयत्।
हा कथं बोधिसत्त्वांशः संमोहाद्भक्षितो मया॥ १६.१७७॥

जीमूतवाहनः सोऽयं परार्थप्राणदायकः।
यस्य भ्रमति कृत्स्नेऽस्मिंस्त्रैलोक्ये कीर्तिघोषणा॥ १६.१७८॥
तन्मे मृतेऽस्मिन्पापस्य प्राप्तमग्निप्रवेशनम्।
अधर्मविषवृक्षस्य पच्यते स्वादु किं फलम्॥ १६.१७९॥
इति चिन्ताकुले तार्क्ष्ये दृष्ट्वा बन्धून्निपत्य सः।
व्रणव्यथायां पञ्चत्वं प्राप जीमूतवाहनः॥ १६.१८०॥
ततो विलपतोस्तत्र तत्पित्रोः शोकदीनयोः।
उत्क्रुश्य मुहुरात्मानं शङ्खचूडे च निन्दति॥ १६.१८१॥
भार्या मलयवत्यस्य नभो दृष्ट्वाश्रुगद्गदम्।
पूर्वप्रसन्नां वरदामित्युपालभताम्बिकाम्॥ १६.१८२॥
विद्याधराधिपो भाविचक्रवर्ती पतिस्तव।
भवितेत्यहमादिष्टा देवि गौरी तदा त्वया॥ १६.१८३॥
तन्मिथ्यावादिनी जाता त्वमप्यसि कथं मयि।
इत्युक्तवत्यां तस्यां सा गौरी प्रत्यक्षतामगात्॥ १६.१८४॥
न मे मिथ्या वचः पुत्रीत्युक्त्वा सा स्वकमण्डलोः।
अमृतेनाशु जीमूतवाहनं सिञ्चति स्म तम्॥ १६.१८५॥
तेन सोऽक्षतसर्वाङ्गः पूर्वाधिकतरद्युतिः।
जीवन्सद्यः समुत्तस्थौ कृती जीमूतवाहनः॥ १६.१८६॥
उत्थितं प्रणतं तं च सर्वेषु प्रणमत्सु सा।
उवाच देवी तुष्टास्मि देहदानेन तेऽमुना॥ १६.१८७॥
तदेषा त्वाभिषिञ्चामि पुत्रात्मीयेन पाणिना।
विद्याधराणामाकल्पं चक्रवर्तिपदेऽधुना॥ १६.१८८॥
एवं वदन्ती जीमूतवाहनं कलशाम्बुधिः।
तमभ्यषिञ्चच्छर्वानी पूजिता च तिरोदधे॥ १६.१८९॥
निपेतुश्चात्र तत्कालं दिव्याः कुसुमवृष्टयः।
नदन्ति स्म च सानन्दं देवदुन्दुभयो दिवि॥ १६.१९०॥
अथोवाच स तं प्रह्वस्तार्क्ष्यो जीमूतवाहनम्।
चक्रवर्तिन्नहं प्रीतः पुरुषातिशये त्वयि॥ १६.१९१॥
अपूर्वोदारमतिना त्रिजगत्कौतुकावहम्।
ब्रह्माण्डभित्तिलिखितं येन चित्रमिदं कृतम्॥ १६.१९२॥

तन्मां प्रशाधि मत्तश्च वृणुष्वाभीप्सितं वरम्।
इत्युक्तवन्तं गरुडं महासत्त्वो जगाद सः॥ १६.१९३॥
न भक्ष्याः सानुतापेन भूत्वा नागाः पुनस्त्वया।
तेऽप्यस्थिशेषा जीवन्तु ये त्वया पूर्वभक्षिताः॥ १६.१९४॥
एवमस्तु न भोक्ष्येऽहं नागाञ्शान्तमतः परम्।
प्राग्ये च भुक्तास्ते जीवन्त्विति ताक्ष्योऽप्युवाच सः॥ १६.१९५॥
ततोऽस्तिशेषा येऽप्यासन्नागास्तत्पूर्वभक्षिताः।
तेऽपि सर्वे समुत्तस्थुस्तद्वरामृतजीविताः॥ १६.१९६॥
सुरैर्नगैर्मुनिगनैः सानन्दैर्मिलितैरथ।
स लोकत्रितयाभिख्यामुवाह मलयाचलः॥ १६.१९७॥
तत्कालं तं च जीमूतवाहनोदन्तमद्भुतम्।
गौर्याः प्रसादाद्विविदुः सर्वे विद्याधरेश्वराः॥ १६.१९८॥
आगत्य ते च चरणावनता हिमाद्रिं निन्युः क्षणान्मुदितबन्धुसुहृत्समेतम्।
तं पार्वतीस्वकरक्लृप्तमहाभिषेकं सच्चक्रवर्तिनमथ प्रतिमुक्तताक्ष्यम्॥ १६.१९९॥
तत्र स पित्रा मात्रा मित्रावसुना च मलयवत्या च।
निजगृहगतागतेन च संयुक्तः शङ्खचूडेन॥ १६.२००॥
लोकोत्तरचरिताद्भुतसिद्धां जीमूतवाहनः सुचिरम्।
अभजत रत्नोपचितां विद्याधरचक्रवर्तिधुरम्॥ १६.२०१॥
इत्यत्युदारसरसामाख्याय कथां तदा स वेतालः।
पुन एव तं त्रिविक्रमसेनं पप्रच्छ राजानम्॥ १६.२०२॥
तद्ब्रूहि शङ्खचूडः किं वा जीमूतवाहनोऽभ्यधिकः।
सत्त्वेन तयोरुभयोः पूर्वोक्तश्चात्र समयस्ते॥ १६.२०३॥
इत्यस्माद्वेतालाच्छ्रुत्वा मौनं विहाय शापभयात्।
तमुवाच स त्रिविक्रमसेनो नृपतिर्निरुद्वेगः॥ १६.२०४॥
बहुजन्मसिद्धमेतच्चित्रं जीमूतवाहनस्य कियत्।
श्लाघ्यः स शङ्खचूडो मरणोत्तीर्णोऽपि यो रिपवे॥ १६.२०५॥
अन्यप्रत्तात्मानं प्राप्य सुदूरं गताय ताक्ष्याय।
पश्चाद्धावन्गत्वा स्वं देहमुपानयत्प्रसभम्॥ १६.२०६॥
एतन्निशम्यैव नृपस्य तस्य वाक्यं स वेतालवरो जगाम।
पुनः स्वधामैव तदंसपृष्ठान्नृपोऽपि तं सोऽनुययौ तथैव॥ १६.२०७॥

# सप्तदशो वेतालः

ततो गत्वा पुनस्तस्मात्स राजा शिंशपातरोः।
तं त्रिविक्रमसेनोऽंसे वीरो वेतालमग्रहीत्॥ १७.१ ॥
प्रस्थितं च ततस्तं स वेतालः स्कन्धतोऽब्रवीत्।
राजञ्श्रमविनोदाय श्रृण्वेतां वच्मि ते कथाम्॥ १७.२ ॥
अखण्डधर्ममर्यादं गङ्गाकूले कृतास्पदम्।
कलेरगम्यं कनकपुरं नाम्नाभवत्पुरम्॥ १७.३ ॥
तस्मिन्यशोधनाख्योऽभूदन्वर्थो वसुधाधिपः।
ररक्ष विप्लवाम्भोधेर्यो वेलाद्रिरिव क्षितिम्॥ १७.४ ॥
जगदाह्लादकश्चण्डप्रतापोऽखण्डमण्डलः।
विधिना यश्च चन्द्रार्कावेकीकृत्येव निर्ममे॥ १७.५ ॥
मौर्ख्यं परपरीवादे न शास्त्रार्थे दरिद्रता।
दोषे न कोषदण्डाभ्यां यस्यासीच्च महीपतेः॥ १७.६ ॥
पापभीरुर्यशोलुब्धः षण्ढः परपुरंध्रिषु।
यः शौर्यौदार्यश्रृङ्गारमयो जनतया जगे॥ १७.७ ॥
तस्य राज्ञः पुरे तस्मिन्नभूदेको महावणिक्।
उन्मादिनीति ख्याता च कन्या तस्याभवत्सुता॥ १७.८ ॥
यो यस्तां हि ददर्शात्र स स तद्रूपसंपदा।
उन्माद्यति स्म मदनस्यापि मोहनशक्तया॥ १७.९ ॥
तस्यां च यौवनस्थायां स गत्वा तत्पिता वणिक्।
यशोधनं तं राजानं नीतिवेदी व्यजिज्ञपत्॥ १७.१० ॥
त्रैलोक्यरत्नभूता मे प्रदेयास्ति सुता प्रभो।
तामनावेद्य देवस्य नान्यस्मै दातुमुत्सहे॥ १७.११ ॥
देवोऽपि सर्वरत्नानां प्रभुः कृत्स्नेऽपि भूतले।
तत्स्वीकृत्यानुगृह्णातु देवस्तां प्रतिमुच्य वा॥ १७.१२ ॥

इत्याकर्ण्य वणिग्वाक्यं स राजा ब्राह्मणान्निजान्।
सादरं व्यसृजत्तस्याः सौलक्षण्यमवेक्षितुम्॥ १७.१३॥
ते गत्वा ब्राह्मणा दृष्ट्वा तां त्रैलोक्यैकसुन्दरीम्।
सद्यः क्षोभं ययुः क्षिप्राल्लब्ध्वा धैर्यमचिन्तयन्॥ १७.१४॥
इमां प्राप्नोति चेद्राजा तद्राष्ट्रमवसीदति।
एतन्मोहितचित्तो हि किं स राज्यमवेक्षते॥ १७.१५॥
तस्मात्सुलक्षणेत्येषा नाख्येया क्षितिपाय नः।
इत्येव मन्त्रं संमन्त्र्य राज्ञस्ते जग्मुरन्तिकम्॥ १७.१६॥
कुलक्षणा सा देवेति तमूचुश्चात्र ते मृषा।
तेन राजा स नैवैतां स्वीचकार वणिक्सुताम्॥ १७.१७॥
ततस्तदाज्ञया तां स कन्यामुन्मादिनीं पिता।
वणिग्बलधराख्याय तत्सेनापतये ददौ॥ १७.१८॥
अथ सा तद्गृहे तस्थौ भर्त्रा तेन समं सुखम्।
कुलक्षणेत्यहं राज्ञा त्यक्तेत्यात्तविमानना॥ १७.१९॥
याति काले च जात्वत्र हत्वा हेमन्तहस्तिनम्।
फुल्लकुन्दलतादन्तं मथिताम्बुजिनीवनम्॥ १७.२०॥
आजगाम लसत्पुष्पमञ्जरीकेसरावलिः।
चूताङ्कुरनखः क्रीदन्कानने मधुकेसरी॥ १७.२१॥
तत्कालं चात्र नगरे तं वसन्तमहोत्सवम्।
स राजा निर्ययौ द्रष्टुं गजारूढो यशोधनः॥ १७.२२॥
तद्रूपालोकसंभाव्यविप्लवाः कुलयोषितः।
अपसारयितुं दत्तं तदा चोद्घोषडिण्डिमम्॥ १७.२३॥
सा श्रुत्वोन्मादिनी तस्मै राज्ञे स्वगृहहर्म्यतः।
आत्मानं दर्शयामास परित्यागावमानतः॥ १७.२४॥
स च तां चक्षुभे दृष्ट्वा राजा ज्वालामिवोद्गताम्।
संधुक्षितस्य कामाग्नेर्मधुना मलयानिलैः॥ १७.२५॥
निर्वर्णयंश्च तद्रूपं जैत्रमस्त्रं मनोभुवः।
गाढं प्रविष्टं हृदये क्षणान्मोहमुपाययौ॥ १७.२६॥
भृत्यैराश्वासितश्चात्र राजधानीं प्रविश्य सः।
पृष्टेभ्यो बुबुधे तेभ्यस्तां प्रागुपनतोज्झिताम्॥ १७.२७॥

ततो निर्वास्य देशात्तांस्तत्कुलक्षणवादिनः।
विप्राननुदिनं दध्यौ तामेवोत्कः स भूपतिः॥ १७.२८॥
अहो जडात्मा निर्लज्जश्चन्द्रो नित्यमुदेति यत्।
जगन्नेत्रोत्सवे तस्या निःकलङ्के मुखे सति॥ १७.२९॥
कठोरौ हेमकलशौ गजकुम्भौ च कर्कशौ।
लभेते नोपमामस्याः स्तनयोः पीनतुङ्गयोः॥ १७.३०॥
काञ्चीनक्षत्रमालाङ्कं तत्तस्या जघनस्थलम्।
कं न कंदर्पमातङ्गमस्तकाभं विलोभयेत्॥ १७.३१॥
इति तां चिन्तयन्नन्तः क्षीयते स्म दिने दिने।
कामाग्निपुटपाकेन पच्यमानः स भूपतिः॥ १७.३२॥
ह्रिया निगूहमानश्च पृच्छद्भ्यो बाह्यलक्षणैः।
कृच्छ्राच्छशंस चाप्तेभ्यः स्वपीडाकारणं स तत्॥ १७.३३॥
अलं संतप्य भजसे स्वाधीनां तर्हि किं न ताम्।
इत्युक्तस्तैश्च नैवैतदनुमेने स धार्मिकः॥ १७.३४॥
ततो बलधरो बुद्ध्वा स सेनापतिरेत्य तम्।
प्रभुमभ्यर्थयामास सद्भक्तश्चरणानतः॥ १७.३५॥
दासस्त्री तव दास्येव सा देव न पराङ्गना।
स्वयं चाहं प्रयच्छामि तद्भार्यां स्वीकुरुष्व मे॥ १७.३६॥
अथवा तां त्यजामीह देव देवकुले ततः।
न दोषो ग्रहणे तस्यास्तव देवकुलस्त्रियः॥ १७.३७॥
इति स्वसेनापतिना निर्बन्धेन स पार्थिवः।
तेनानुनाथ्यमानोऽपि सान्तःकोपमुवाच तम्॥ १७.३८॥
राजा भूत्वा कथं कुर्यामधर्ममहमीदृशम्।
मय्युल्लङ्घितमर्यादे को हि तिष्ठेत्स्ववर्त्मनि॥ १७.३९॥
भक्तोऽपि च भवान्पापे नियोजयति मां कथम्।
परलोकमहादुःखहेतौ क्षणसुखावहे॥ १७.४०॥
न क्षमिष्ये च ते धर्म्यान्दारान्यदि विहास्यसि।
सहते मादृशः को हि तादृशं धर्मविप्लवम्॥ १७.४१॥
तद्वरं मृत्युरित्युक्त्वा स राजा निषिषेध तम्।
त्यजन्त्युत्तमसत्त्वा हि प्राणानपि न सत्पथम्॥ १७.४२॥

तथैवार्थयमानांश्च पौरजानपदानपि।
मिलितान्स निराचक्रे राजा सुदृढनिश्चयः॥ १७.४३॥
ततः क्रमेण तेनैव स्मरज्वरभरोष्मणा।
प्रक्षीणदेहः प्रययौ स यशःशेषतां नृपः॥ १७.४४॥
सेनापतिश्चासहिष्णुस्तं तथा प्रमयं प्रभोः।
सोऽग्निं विवेश भक्तानामनिर्वाच्यं हि चेष्टितम्॥ १७.४५॥
इत्याख्यातकथाश्चर्यो वेतालोऽंसस्थितस्तदा।
स त्रिविक्रमसेनं तं भूयः पप्रच्छ पार्थिवम्॥ १७.४६॥
तदेतयोः को नृपतेः सेनापतिमहीभृतोः।
सत्त्वेनाभ्यधिको ब्रूहि पूर्वोक्तः समयश्च ते॥ १७.४७॥
इति वेतालतः श्रुत्वा मुक्तमौनः स तं नृपः।
प्रत्युवाच द्वयोर्राजा सत्त्ववानधिकस्तयोः॥ १७.४८॥
तदाकर्ण्यैव वेतालः साक्षेपस्तमभाषत।
सेनापतिः कथं नात्र राजन्नभ्यधिको वद॥ १७.४९॥
यस्तथा स्वामिने भक्त्या स्वभार्यां तां तथाविधाम्।
सुचिरज्ञाततद्भोगसुखास्वादोऽप्युपानयत्॥ १७.५०॥
आत्मानं चाग्निसाच्चक्रे तस्मिन्पञ्चत्वमागते।
अनास्वादिततद्भोगस्तत्कान्तां तु जहौ नृपः॥ १७.५१॥
वेतालेनैवमुक्तस्तु विहस्य स नृपोऽब्रवीत्।
यद्यप्येवं तथाप्येतत्किं चित्रं कुलपुत्रकः॥ १७.५२॥
सेनापतिः स भक्त्या यत्स्वाम्यर्थे तत्तथाकरोत्।
प्राणैरपि हि भृत्यानां स्वामिसंरक्षणं व्रतम्॥ १७.५३॥
राजानस्तु मदाध्माता गजा इव निरङ्कुशाः।
छिन्दन्ति धर्ममर्यादाश्रृङ्खलां विषयोन्मुखाः॥ १७.५४॥
तेषां ह्युद्रिक्तचित्तानामभिषेकाम्बुभिः समम्।
विवेको विगलत्योघेनोह्यमान इवाखिलः॥ १७.५५॥
क्षिप्यन्त इव चोद्धूय चलच्चामरमारुतैः।
वृद्धोपदिष्टशास्त्रार्थरजोमशकमक्षिकाः॥ १७.५६॥
आतपत्रेण सत्यं च सूर्यालोको निवार्यते।
विभूतिवात्योपहता दृष्टिर्मार्गं च नेक्षते॥ १७.५७॥

ते ते च विपदं प्राप्ता मारमोहितचेतसः।
जगद्विजयिनोऽपीह राजानो नहुषादयः॥ १७.५८॥
एषो राजा पुनः पृथ्व्यामेकच्छत्रोऽपि यत्तया।
उन्मदिन्या चपलया लक्ष्म्येव न विमोहितः॥ १७.५९॥
प्राणानपि स धर्मात्मा तत्याज न पुनः पदम्।
अमार्गे निदधे धीरस्तेनासौ मेऽधिको मतः॥ १७.६०॥
इत्याकर्ण्य नृपस्य तस्य वचनं भूयस्तदंसस्थला-
द्वेतालः सहसा स्वमेव स पदं मायाप्रभावाद्ययौ।
राजाप्यन्वसरत्तथैव स पुनः संप्राप्तुमेतं जवा-
दारब्धे हि सुदुःकरेऽपि महतां मध्ये विरामः कुतः॥ १७.६१॥

# अष्टादशो वेतालः

ततः पितृवने तस्मिन्क्रव्यभक्षिभिरावृते।
ज्वालाविलोलरसनैर्भूतैरिव चिताग्निभिः॥ १८.१ ॥
गत्वैव तस्यामक्षोभ्यः क्षपायां शिंशपातरुम्।
स त्रिविक्रमसेनस्तमाससाद पुनर्नृपः॥ १८.२॥
तत्रापश्यच्च वेतालविकृतान्सदृशाकृतीन्।
उल्लम्बमानान्सुबहून्प्रेतकायानशङ्कितम्॥ १८.३ ॥
अहो किमेतत्किं वान्यन्मायी कालं क्षिपत्ययम्।
वेतालो मे न वेद्म्येषां ग्राह्यं येनेह भूयषाम्॥ १८.४॥
असिद्धार्थस्य चेद्रात्रिरियं मम गमिष्यति।
ततो वह्निं प्रवेक्ष्यामि न सहिष्ये तु हास्यताम्॥ १८.५॥
इति चिन्तयतस्तस्य राज्ञो विज्ञाय निश्चयम्।
सत्त्वतुष्टः स वेतालः स्वमायां संजहार ताम्॥ १८.६ ॥
ततो दृष्ट्वैकमेवात्र वेतालं नृकलेवरे।
अवतीर्य गृहीत्वांसे स प्रतस्थे पुनर्नृपः॥ १८.७॥
प्रक्रामन्तं च तं भूयः स वेतालोऽभ्यभाषत।
राजन्नोद्विजसे चित्रं तदिमां मे कथां सृणु॥ १८.८॥
अस्ति गौरीतपःक्लेशवृतेन त्रिपुरारिणा।
असामान्यगुणोत्कर्षलुब्धेनेव स्वयंवृता॥ १८.९॥
भोगवत्यमरावत्योस्तृतीयोज्जयिनी पुरी।
उदारसुकृतप्राप्यनानाभोगोपबृंहिता॥ १८.१०॥
यस्यां स्तब्धत्वकार्कश्ये कुचेषु वरयोषिताम्।
तासामेव भ्रुवोर्भङ्गो लोचनेषु च चापलम्॥ १८.११॥
तमो निशासु वक्रत्वं यस्यां कविवरोक्तिषु।
मदो दन्तिषु जाड्यं च मुक्तामलयजेन्दुषु॥ १८.१२॥

तस्यां चन्द्रप्रभाख्यस्य राज्ञोऽमात्यो बहुश्रुतः।
देवस्वामीत्यभूद्विप्रो भूरियज्ञो महाधनः॥ १८.१३॥
तस्य कालेन तनयश्चन्द्रस्वामीत्यजायत।
सोऽधीतविद्योऽपि युवा द्यूतैकव्यसनोऽभवत्॥ १८.१४॥
एकदा च द्विजसुतश्चन्द्रस्वामी स कांचन।
द्यूतकारमहाठिण्ठां द्यूतेन क्रीडितुं ययौ॥ १८.१५॥
आश्लिष्यामः कमत्रेति विपद्भिरिव वीक्षितुम्।
विक्षिप्तैः कृष्णशाराभैर्नेत्रैरक्षैर्निरन्तराम्॥ १८.१६॥
कः सोऽस्ति न श्रियं यस्य हराम्यप्यलकापतेः।
इतीव तन्वतीं नादान्द्यूतकृत्कलहस्वनैः॥ १८.१७॥
तां प्रविश्य क्रमाद्दीव्यन्नक्षैः स कितवैः सह।
वस्त्रादि हारयित्वापि धनमन्यदहारयत्॥ १८.१८॥
मृग्यमाणं च यन्नादात्स तद्धनमसंभवि।
तदवष्टभ्य सभ्येन लगुडैः पर्यताड्यत॥ १८.१९॥
लगुडाहतसर्वाङ्गः पाषाणमिव निश्चलम्।
कृत्वा मृतमिवात्मानं तस्थौ विप्रसुतोऽथ सः॥ १८.२०॥
तथैव दिवसान्द्वित्रांस्तत्र तस्मिन्नवस्थिते।
क्रुद्धः स सभ्यष्ठिण्ठायां कितवान्स्वानभाषत॥ १८.२१॥
श्रितानेनाश्मता तावत्तदेतं क्षिपत क्वचित्।
नीत्वान्धकूपे निःसत्त्वं धनं दास्याम्यहं तु वः॥ १८.२२॥
इत्युक्तास्तेन कितवास्तं चन्द्रस्वामिनं ततः।
अरण्यं निन्युरुत्क्षिप्य दूरं कूपगवेषिणः॥ १८.२३॥
तत्रैको वृद्धकितवस्तानन्यानेवमभ्यधात्।
मृतोऽयं प्रायशस्तत्किं कूपे क्षिप्तेन नोऽमुना॥ १८.२४॥
तदिहैवैनमुज्झित्वा वक्ष्यामः कूप उज्झितम्।
इति ते तद्वचः सर्वे तथेति प्रतिपेदिरे॥ १८.२५॥
ततस्त्यक्त्वा गतेष्वेषु कितवेषु स उत्थितः।
चन्द्रस्वामी विवेशात्र शून्यमेकं शिवालयम्॥ १८.२६॥
तत्र किंचित्समाश्वस्य चिन्तयामास दुःखितः।
विश्वस्तो मायया कष्टं मुषितः कितवैरहम्॥ १८.२७॥

तदीदृशः क्व गच्छामि नाग्नोपहतपांशुलः।
पिता बन्धुः सुहृद्वापि दृष्ट्वा किं हि वदेन्मम॥ १८.२८॥
तत्संप्रति स्थितोऽस्मीह नक्तं च क्षुत्प्रशान्तये।
पश्यामि निर्गत्य कथं यतिष्ये भोजनं प्रति॥ १८.२९॥
इत्यालोचयतस्तस्य क्लान्तस्यानम्बरस्य च।
मन्दीकृतातपोऽस्ताद्रिं रविस्त्यक्ताम्बरो ययौ॥ १८.३०॥
तावच्च भूतिदिग्धाङ्गस्तत्रायाति स्म तापसः।
महाव्रती जटाशूलधरो हर इवापरः॥ १८.३१॥
स चन्द्रस्वामिनं दृष्ट्वा कोऽसीति परिपृच्छ्य च।
स्रुत्वा तस्माच्च वृत्तान्तं प्रह्वं तं तापसोऽब्रवीत्॥ १८.३२॥
त्वं ममेहाश्रमं प्राप्तः क्षुत्क्लान्तोऽचिन्तितोऽतिथिः।
तदुत्तिष्ठ कृतस्नानो भिक्षाभागं ममाहर॥ १८.३३॥
इत्युक्तो व्रतिना सोऽथ चन्द्रस्वामी जगाद तम्।
विप्रोऽहं भगवन्भोक्ष्ये भिक्षाभागं कथं तव॥ १८.३४॥
तच्छ्रुत्वा स व्रती सिद्धः प्रविश्य मठिकां निजाम्।
इष्टसंपादिनीं विद्यां सस्मारातिथिवल्लभः॥ १८.३५॥
संस्मृतोपस्थितां तां च किं करोमीति वादिनीम्।
अमुष्यातिथ्यमतिथेः कुरुष्वेति शशास ताम्॥ १८.३६॥
तथेत्युक्ते तया तत्र सोद्यानं साङ्गनाजनम्।
पुरं सौवर्णमुत्पन्नं चन्द्रस्वामी ददर्श सः॥ १८.३७॥
विस्मितं च तमभ्येत्य तस्माद्वाराङ्गनाः पुरात्।
ऊचुरुत्तिष्ठ भद्रैहि स्नाहि भुङ्क्ष्व त्यज श्रमम्॥ १८.३८॥
इत्युक्त्वाभ्यन्तरं नीत्वा स्नापयित्वानुलिप्य च।
ताभिः स दत्तसद्वस्त्रो निन्येऽन्यद्वासकोत्तमम्॥ १८.३९॥
तत्रान्तः स ददर्शैकां प्रधानयुवतिं युवा।
सर्वाङ्गसुन्दरीं धात्रा कौतुकादिव निर्मिताम्॥ १८.४०॥
तया स सोत्कयोत्थाय स्वासनार्धोपवेशितः।
बुभुजे दिव्यमाहारं तयैवात्र समं ततः॥ १८.४१॥
भुक्तपक्वफलस्वादुताम्बूलः स्वरसेन च।
पर्यङ्कशयने भेजे तत्संभोगसुखं निशि॥ १८.४२॥

प्रातः प्रबुद्धश्चापश्यत्तदेवात्र शिवायलम्।
नापि दिव्याङ्गनां नापि पुरं तन्न परिच्छदम्॥ १८.४३॥
ततः स विघ्नो निर्यातं मठिकातः स्मिताननम्।
पृष्टरात्रिसुखं प्रातस्तापसं तं व्यजिज्ञपत्॥ १८.४४॥
तत्प्रसादादहं रात्रावुषितो भगवन्सुखम्।
किं तु यास्यन्ति मे प्राणास्तया दिव्यस्त्रिया विना॥ १८.४५॥
तच्छ्रुत्वा स तपस्वी तं हसन्कारुणिकोऽब्रवीत्।
इहैवास्स्व पुनर्नक्तं भविष्यति तथैव ते॥ १८.४६॥
इत्युक्ते व्रतिना तेन तद्युक्त्यैव प्रतिक्षपम्।
चन्द्रस्वाम्यत्र सोऽभुङ्क्त भोगांस्तांस्तत्प्रसादतः॥ १८.४७॥
बुद्ध्वा च तं शनैर्विद्याप्रभावं विधिचोदितः।
एकदा तापसेन्द्रं तं स प्रसाद्यान्वयाचत॥ १८.४८॥
सत्यं कृपा चेद्भगवन्मयि ते शरणागते।
तदेतां देहि मे विद्यां यत्प्रभावोऽयमीदृशः॥ १८.४९॥
इति ब्रुवाणं निर्बन्धात्तं प्रत्याह स तापसः।
असाध्या तव विद्येयं साध्यतेऽन्तर्जले ह्यसौ॥ १८.५०॥
तत्र चैषा सृजत्याशु जपतः साधकस्य तत्।
मायाजालं विमोहाय येन सिद्धिं न सोऽश्नुते॥ १८.५१॥
स हि तत्र पुनर्जातं बालमात्मानमीक्षते।
ततो युवानमुद्व्यूढदारं जातात्मजं तथा॥ १८.५२॥
सुहृन्मेऽयमयं शत्रुरिति मिथ्या स मुह्यति।
न च स्मरति जन्मेदं न विद्यासाधने क्रियाम्॥ १८.५३॥
यस्तु त्रिरष्टवर्षः सन्गुरुविद्याप्रबोधितः।
जन्म स्मृत्वा विदित्वा तद्धीरो मायाविजृम्भितम्॥ १८.५४॥
तद्वशोऽप्यत्र कुरुते तथैवाग्निप्रवेशनम्।
परमार्थं जलोत्तीर्णः सिद्धविद्यः स पश्यति॥ १८.५५॥
अन्यस्य न परं विद्या शिष्यस्यैषा हि सिध्यति।
अस्थानार्पणतो यावद्गुरोरपि विनश्यति॥ १८.५६॥
मत्सिद्ध्यैव फले सिद्धे किं ग्रहेणामुना तव।
मत्सिद्धिहान्या मा जातु तवैतदपि नङ्क्ष्यति॥ १८.५७॥

एवं तपस्विनोक्तेऽपि चन्द्रस्वामी ग्रहेण सः।
शिक्ष्यामि सर्वं मा भूद्वश्चिन्तात्रेति तमब्रवीत्॥ १८.५८॥
ततोऽस्मै प्रतिपेदे तां विद्यां दातुं स तापसः।
बताश्रितानुरोधेन किं न कुर्वन्ति साधवः॥ १८.५९॥
ततो नीत्वा नदीतीरं स तं स्माह महाव्रती।
वत्स विद्यां जपन्मायां यदि द्रक्ष्यसि तां तदा॥ १८.६०॥
मायाग्निमेव प्रविशेर्विध्यया बोधितो मया।
अहं च तावत्स्थास्यामि तवेहैव नदीतटे॥ १८.६१॥
इत्युक्त्वाध्यापयामास तमाचान्तं शुचिं शुचिः।
स चन्द्रस्वामिनं विद्यां सम्यक्तां व्रतिनां वरः॥ १८.६२॥
ततस्तीरे स्थिते तस्मिन्गुरौ मूर्ध्ना प्रणम्य तम्।
चन्द्रस्वामी स रभसान्नदीमवततार ताम्॥ १८.६३॥
तस्यामन्तर्जले विद्यां तां जपन्सहसैव सः।
तन्मायामोहितो मिथ्या सर्वं विस्मृत्य जन्म तत्॥ १८.६४॥
वीक्षते यावदन्यस्यामुत्पन्नः स्वात्मना पुरि।
पुत्रो विप्रस्य कस्यापि बुद्धिं स शनकैर्गतः॥ १८.६५॥
कृतोपनयनोऽधीतविद्यो दारानवाप्य च।
तद्दुःखसुखसंमूढः संपूर्णोऽपत्यवान्क्रमात्॥ १८.६६॥
ततश्चात्र सुतस्नेहस्वीकृतस्तत्तदाचरत्।
स्थितो बद्धरतिः सार्धं पितृभ्यां बन्धुभिस्तथा॥ १८.६७॥
एवं जन्मान्तरं मिथ्या तस्यानुभवतोऽत्र सः।
काले प्रबोधिनीं विद्यां गुरुः प्रायुङ्क्त तापसः॥ १८.६८॥
स तद्विद्याप्रयोगेण सद्यस्तेन प्रबोधितः।
स्मृत्वात्मानं गुरुं तं च मायाजालमवेत्य तत्॥ १८.६९॥
उद्यतोऽग्निप्रवेशाय दिव्यासाध्यफलाप्तये।
पर्यवारि निषेधद्भिर्वृद्धाप्तगुरुबन्धुभिः॥ १८.७०॥
बहुधा बोध्यमानोऽपि तैर्दिव्यसुखलोलुपः।
स सज्जितचितं प्रायान्नदीतीरं सबान्धवः॥ १८.७१॥
दृष्ट्वात्र वृद्धौ पितरौ भार्यां च मरणोद्यताम्।
क्रन्दन्ति बालापत्यानि सोऽथ मोहादचिन्तयत्॥ १८.७२॥

कष्टं म्रियन्ते स्वजनाः सर्वे मे विशतोऽनलम्।
न च जानामि किं सत्यं गुरोस्तद्वचनं न वा॥ १८.७३॥
तत्किं नु प्रविशाम्यग्निमुत न प्रविशामि किम्।
अथवा तत्कथं मिथ्या स्यात्संवादि गुरोर्वचः॥ १८.७४॥
तद्विशाम्यनलं काममित्यन्तः प्रविमृश्य सः।
अग्निप्रवेशं विदधे चन्द्रस्वामी किल द्विजः॥ १८.७५॥
अनुभूतहिमस्पर्शो वह्नेश्च स सविस्मयः।
शान्तमायो नदीतीरादुत्थायोपययौ तटम्॥ १८.७६॥
तत्र स्थितं च दृष्ट्वा तं गुरुं नत्वा च पादयोः।
पृच्छन्तं चाग्निशैत्यान्तं स्वमुदन्तमबोधयत्॥ १८.७७॥
ततस्तं स गुरुः प्राह वत्स शङ्के कृतस्त्वया।
अपचारोऽत्र शीतस्ते कथं जातोऽग्निरन्यथा॥ १८.७८॥
अदृष्टमेतदेतस्या विद्यायाः साधने यतः।
एतद्गुरोर्वचः श्रुत्वा चन्द्रस्वामी जगाद सः॥ १८.७९॥
नापचारो मया कश्चिद्विहितो भगवन्निति।
ततः स तद्गुरुर्विद्यां जिज्ञासुस्तां समस्मरत्॥ १८.८०॥
न च साविरभूत्तस्य न तच्छिष्यस्य तस्य वा।
नष्टविद्यावथोभौ तौ विषण्णौ जग्मतुस्ततः॥ १८.८१॥
इत्याख्याय कथामथ वेतालः पृष्टवान्स तं भूयः।
पृथ्वीपतिं त्रिविक्रमसेनं समयं निगद्य पूर्वोक्तम्॥ १८.८२॥
राजन्संशयमेतं छिन्द्धि मम ब्रूहि हेतुना केन।
विहितेऽपि यथोद्दिष्टे कर्मणि विद्योभयोस्तयोर्नष्टा॥ १८.८३॥
एतत्स वेतालवचो निशम्य तं प्रत्यवोचन्मनुजेन्द्रवीरः।
जाने भवान्मे क्षिपतीह कालं योगेश्वरैवं तदपि ब्रवीमि॥ १८.८४॥
न दुष्करेणापि हि कर्मणैव शुद्धेन सिद्धिः पुरुषस्य लभ्या।
यावन्न निष्कम्प्य विकल्पशुद्धं धीरं मनो निर्मलसत्त्ववृत्ति॥ १८.८५॥
तस्यात्र मन्दस्य तु विप्रयूनश्चित्तं प्रबुध्यापि विकल्पते स्म।
विद्या न सा तेन गतास्य सिद्धिरस्थानदानाच्च गुरोर्विनष्टा॥ १८.८६॥
इति तस्य नृपस्य सृष्टवाचो बत वेतालवरोऽंसतः स भूयः।
निजमेव पदं ययावलक्ष्यो नृपतिस्तं च तथैव सोऽन्वयासीत्॥ १८.८७॥

# एकोनविंशो वेतालः

अथ गत्वा पुनः स्कन्धे वेतालं शिंशपाद्रुमात्।
स त्रिविक्रमसेनस्तं गृहीत्वोदचलन्नृपः॥ १९.१॥
आगच्छन्तं च तं भूयो वेतालः सोऽभ्यभाषत।
राजञ्शृणु कथमेकां हृद्यां ते कथयाम्यहम्॥ १९.२॥
अस्ति वक्रोलकं नाम पुरं सुरपुरोपमम्।
तस्मिन्सूर्यप्रभाख्योऽभूद्राजा जम्भारिसंनिभः॥ १९.३॥
सौकर्यौद्यतया मूर्त्या दत्तानन्दो वसुंधराम्।
इमां हरिरिवोद्धृत्य यो बभार चिरं भुजे॥ १९.४॥
धूमासङ्गेऽश्रुसंपातः शृङ्गारे मारसंकथाः।
द्वाःस्थेषु हेमदण्डाश्च राष्ट्रे यस्याभवन्प्रभोः॥ १९.५॥
सर्वसंपत्समृद्धस्य तस्यैकाभूदनिर्वृतिः।
नोदपद्यत यत्पुत्रो बहुष्वन्तःपुरेष्वपि॥ १९.६॥
एतस्मिंश्च कथासंधौ ताम्रलिप्त्यां महापुरि।
बभूव धनपालाख्यो धुर्यो धनवतां वनिक्॥ १९.७॥
तस्य चाजायतैकैव नाम्ना धनवती सुता।
विद्याधरी च्युता शापात्सौन्दर्येणैव सूचिता॥ १९.८॥
तस्यां च यौवनस्थायां स वणिक्पञ्चतां ययौ।
तद्धनं राजसानाथ्यादाक्रान्तमथ गोत्रजैः॥ १९.९॥
ततो हिरण्यवत्याख्या वणिजस्तस्य गेहिनी।
आदाय रत्नभरणं निजमप्रकटस्थितम्॥ १९.१०॥
धनवत्या तया साकं स्वदुहित्रा निशामुखे।
पलाय्य दायादभयाद्गृहाद्द्रुतं विनिर्ययौ॥ १९.११॥
ध्वान्तेन बहिरन्तश्च सा दुःखेनान्धकारिता।
कृच्छ्राद्बहिःपुरं प्रायात्सुताहस्तावलम्बिनी॥ १९.१२॥

तत्र संतमसे यान्ती विधियोगादलक्षितम्।
अंसेनाताडयच्चौरं शूलाग्रारोपितस्थितम्॥ १९.१३॥
स सजीवस्तदंसाग्रघट्टनाधिकपीडितः।
आः क्षते क्षारमेतन्मे क्षिप्तं केनेत्यभाषत॥ १९.१४॥
ततस्तत्रैव सा कोऽसीत्यपृच्छत्तं वणिग्वधूः।
प्रत्युवाच ततश्चौरश्चौरोऽहमिह सूचितः॥ १९.१५॥
शूले पापस्य चाद्यापि नोत्क्रामन्ति ममासवः।
तदार्ये त्वं मम ब्रूहि कासिकैवं प्रयासि च॥ १९.१६॥
तच्छ्रुत्वा तं वणिग्भार्या यावत्स्वोदन्तमाह सा।
तावत्तिलकितं प्राच्या मुखमुद्भासितेन्दुना॥ १९.१७॥
ततो दिक्षु प्रकाशासु स चौरस्तां वणिक्सुताम्।
दृष्ट्वा धनवतीं कन्यां तन्मातरमुवाच ताम्॥ १९.१८॥
शृणु मे प्रार्थनामेकां सहस्रं काञ्चनस्य ते।
ददामि तदिमां मह्यं स्वसुतां देहि कन्यकाम्॥ १९.१९॥
किमेतया तवेत्युक्तो हसन्त्याथ तयात्र सः।
पुनश्चौरोऽब्रवीन्नास्ति पुत्रो मम गतायुषः॥ १९.२०॥
न चापुत्रोऽश्नते लोकांस्तदेषा यं मदाज्ञया।
कुत्रचिज्जनयेत्पुत्रं क्षेत्रजः स भवेन्मम॥ १९.२१॥
इत्येतां प्रार्थये त्वं तु तद्विधत्स्व ममेप्सितम्।
तच्छ्रुत्वा सा वणिग्योषिल्लोभात्तत्प्रत्यपद्यत॥ १९.२२॥
आनीय च कुतोऽप्यम्बु पाणौ चौरस्य तस्य सा।
एषा सुता मया तुभ्यं कन्या दत्तेत्यपातयत्॥ १९.२३॥
सोऽपि तद्दुहितुर्दत्तयथोक्ताज्ञो जगाद ताम्।
गच्छामुष्य वटस्याधः खात्वा स्वर्णं गृहाण तत्॥ १९.२४॥
गतासोर्दाहयित्वा मे देहं युक्त्या विसृज्य च।
अस्थीनि तीर्थे ससुता गच्छेर्वक्रोलकं पुरम्॥ १९.२५॥
तत्र सूर्यप्रभे राज्ञि सौराज्यसुखिते जने।
निरुपद्रवनिश्चिन्ता स्थास्यसि त्वं यथेच्छसि॥ १९.२६॥
इत्युक्त्वा तृषितः पीत्वा तयैवोपहृतं जलम्।
शूलव्यधव्यथोत्क्रान्तजीवश्चौरो बभूव सः॥ १९.२७॥

ततो गत्वा वणिक्स्त्री सा स्वर्णं वटतरोस्तलात्।
गृहीत्वा ससुता गुप्तमगाद्भर्तृसुहृद्गृहम्॥ १९.२८॥
तत्र स्थित्वा च युक्त्या तद्दाहयित्वा कलेवरम्।
चौरस्य तस्य तीर्थेऽस्थिक्षेपादिकमकारयत्॥ १९.२९॥
अन्येद्युश्चात्तगुप्तार्था ततो निर्गत्य सात्मजा।
प्रयान्ती क्रमशः प्राप सा तद्वक्रोलकं पुरम्॥ १९.३०॥
तत्रैकं वसुदत्ताख्याद्गृहं क्रीत्वा वणिग्वरात्।
तस्मिन्नुवास सुतया धनवत्या तया सह॥ १९.३१॥
तदा च तत्रोपाध्यायो विष्णुस्वामीत्यभूत्पुरे।
मनःस्वामीति तस्यासीच्छिष्यो विप्रोऽतिरूपवान्॥ १९.३२॥
विध्याभिजनयुक्तोऽपि स यौवनवशीकृतः।
तत्र हंसावलीं नाम वाञ्छति स्म विलासिनीम्॥ १९.३३॥
सा च सौवर्णदीनारशतपञ्चकमग्रहीत्।
भाटिं तस्य च तन्नाभूद्व्यषीदत्तेन सोऽन्वहम्॥ १९.३४॥
एकदा च तमद्राक्षीत्तादृशं सा वणिक्सुता।
क्षामाभिरामवपुषं धनवत्यत्र हर्म्यतः॥ १९.३५॥
तद्रूपहृतचित्ता च भर्तुश्चौरस्य तस्य सा।
स्मृत्वानुज्ञां समीपस्थां युक्त्यावोचत्स्वमातरम्॥ १९.३६॥
अम्ब विप्रसुतस्यास्य पश्यैते रूपयौवने।
कीदृशे बत विश्वस्य नयनामृतवर्षिणी॥ १९.३७॥
एतच्छ्रुत्वैव तस्मिंस्तां बद्धभावामवेत्य च।
तन्माता सा वणिग्भार्या मनस्येवमचिन्तयत्॥ १९.३८॥
मद्दुहित्रानया तावद्वरणीयः सुताप्तये।
कश्चिद्भर्त्राज्ञया तस्मादेष एवार्थ्यते न किम्॥ १९.३९॥
इत्याकलय्य व्यसृजत्तत्संदिश्य मनीषितम्।
रहस्यधारिणीं चेटीं तमानेतुं सुताकृते॥ १९.४०॥
सा गत्वा विजने नीत्वा चेटी तस्मै शशंस तत्।
स च श्रुत्वा द्विजयुवा व्यसनी तामभाषत॥ १९.४१॥
यदि हंसावलीहेतोर्दीनारशतपञ्चकम्।
सौवर्णं दीयते सह्यं तदेकामेमि यामिनीम्॥ १९.४२॥

इति तेनोक्तया चेट्या तया गत्वा तथैव सा।
उक्ता वणिक्स्त्री तस्मै तत्तद्धस्ते प्राहिणोद्धनम्॥ १९.४३॥
तद्गृहीत्वा मनःस्वामी तत्पुत्र्या वासकं ययौ।
तस्याः स तन्निसृष्टाया धनवत्यः सचेटिकः॥ १९.४४॥
तत्र तां विततोत्कण्ठां कान्तां भूषितभूतलाम्।
स चकोर इव ज्योत्स्नां ददर्श च जहर्ष च॥ १९.४५॥
तया समं च नीत्वा तां रात्रिं संभोगलीलया।
निर्गत्य स ततो गुप्तं ययौ प्रातर्यथागतम्॥ १९.४६॥
सापि तस्माद्धनवती सगर्भाभूद्वणिक्सुता।
काले च सुषुवे पुत्रं लक्षणानुमितायतिम्॥ १९.४७॥
परितुष्टां तदा तां च सुतोत्पत्त्या समातृकाम्।
आदिदेश हरः स्वप्ने दर्शितस्ववपुर्निशि॥ १९.४८॥
युक्तं हेमसहस्रेण नीत्वा बालमुषस्यमुम्।
सूर्यप्रभनृपस्येह मञ्चस्थं द्वारि मुञ्चतम्॥ १९.४९॥
एवं स्यात्क्षेममित्युक्ता शूलिना सा वणिक्सुता।
तन्माता च प्रबुध्यैतं स्वप्नमन्योन्यमूचतुः॥ १९.५०॥
नीत्वा च तं तत्यजतुर्भगवत्प्रत्ययाच्छिशुम्।
राज्ञः सूर्यप्रभस्यास्य सिंहद्वारे सहेमकम्॥ १९.५१॥
तावच्च तमपि स्वप्ने सुतचिन्तातुरं सदा।
तत्र सूर्यप्रभं भूपमादिदेश वृषध्वजः॥ १९.५२॥
उत्तिष्ठ राजन्बालस्ते सिंहद्वारे सकाञ्चनः।
केनापि स्थापितो भव्यो मञ्चकस्थं गृहाण तम्॥ १९.५३॥
इत्युक्तः शंभुना प्रातः प्रबुद्धोऽपि तथैव सः।
द्वाःस्थैः प्रविश्य विज्ञप्तो निर्ययौ नृपतिः स्वयम्॥ १९.५४॥
दृष्ट्वा च सिंहद्वारे तं बालं सकनकोत्करम्।
रेखाच्छत्त्रध्वजाद्यङ्कपाणिपादं शुभाकृतिम्॥ १९.५५॥
दत्तो ममोचितः पुत्रः शंभुनायमिति ब्रुवन्।
स्वयं गृहीत्वा बाहुभ्यां राजधानीं विवेश सः॥ १९.५६॥
चकार चोत्सवं तावदसंख्यातं ददद्वसु।
दरिद्रशब्दस्यैकस्य यावदासीन्निरर्थता॥ १९.५७॥

नृत्तवाद्यादिभिर्नीत्वा द्वादशाहं ततः स तम्।
पुत्रं चन्द्रप्रभं नाम्ना चक्रे सुर्यप्रभो नृपः॥ १९.५८॥
ववृधे राजपुत्रोऽत्र सोऽथ चन्द्रप्रभः क्रमात्।
वपुषेव गुणौघेनाप्याश्रितानन्ददायिना॥ १९.५९॥
शनैर्युवा च संजज्ञे शौर्यौदार्यश्रुतादिभिः।
आवर्जितप्रकृतिकः क्ष्माभारोद्वहनक्षमः॥ १९.६०॥
तादृशं च ततो दृष्ट्वा तं स सूर्यप्रभः पिता।
राज्येऽभिषिच्यैव कृती वृद्धो वाराणसीं ययौ॥ १९.६१॥
पृथ्वीं शासति तस्मिंश्च तनये नयशालिन।
स राजा तत्र तत्याज चरंस्तीव्रतपस्तनुम्॥ १९.६२॥
बुद्धा पितृविपत्तिं तामनुशोच्य कृतक्रियः।
सोऽथ चन्द्रप्रभो राजा सचिवान्धार्मिकोऽब्रवीत्॥ १९.६३॥
तातस्य तावत्केनाहमनृणो भवितुं क्षमः।
तथाप्येकां स्वहस्तेन ददाम्येतस्य निष्कृतिम्॥ १९.६४॥
नीत्वा क्षिपामि गङ्गायामस्थीन्यस्य यथाविधि।
गत्वा सर्वपितृह्यश्च गयां पिण्डं ददाम्यहम्॥ १९.६५॥
प्रसङ्गात्तीर्थयात्रां च करोम्यापूर्वसागरम्।
इत्युक्तवन्तं राजानं मन्त्रिणस्तं व्यजिज्ञपन्॥ १९.६६॥
न देव युज्यते कर्तुमेतद्राज्ञः कथंचन।
न हि राज्यं बहुछिद्रं क्षणं तिष्ठत्यरक्षितम्॥ १९.६७॥
तदेषा परहस्तेन कार्या ते पित्रुपक्रिया।
स्वधर्मपालनादन्या तीर्थयात्रा च का तव॥ १९.६८॥
बह्वपायं क्व पान्थत्वां नित्यगुप्ताः क्व पार्थिवाः।
इति मन्त्रिवचः श्रुत्वा राजा चन्द्रप्रभोऽब्रवीत्॥ १९.६९॥
अलं विकल्पैः पित्रर्थे गन्तव्यं निश्चितं मया।
द्रष्टव्यानि च तीर्थानि यावन्मे क्षमते वयः॥ १९.७०॥
पश्चा को वेत्ति किं भावि शरिरे क्षणनश्वरे।
राज्यं चागमनं यावद्रक्ष्यं युष्माभिरेव मे॥ १९.७१॥
श्रुत्वैतं निश्चयं राज्ञस्तूष्णीमासत मन्त्रिणः।
ततः प्रयणसंभारं सज्जीचक्रे स भूपतिः॥ १९.७२॥

अथाह्नि स शुभे स्नातो हुताग्निः पूजितद्विजः।
सुयुक्तं रथमास्थाय प्रयतः शान्तवेषभृत्॥ १९.७३॥
सामन्तान्नजपुत्रांश्च पौराञ्जनपदानपि।
निवर्त्यानिच्छतः कृच्छ्रादासीमान्तानुयायिनः॥ १९.७४॥
ब्राह्मणैर्वाहनारूढैः समं स सपुरोहितः।
प्रतस्थे सचिवन्यस्तराज्यश्चन्द्रप्रभो नृपः॥ १९.७५॥
विचित्रवेषभाषादिविलोकनविनोदितः।
पश्यन्नानाविधान्देशान्क्रमात्प्राप च जाह्नवीम्॥ १९.७६॥
ददर्श ता च जन्तूनां जलकल्लोलपङ्क्तिभिः।
त्रिदिवारोहसोपानपद्धतिं सृजतीमिव॥ १९.७७॥
हिमवत्प्रभवां शंभोः कृतक्रीडाकचग्रहाम्।
बिभ्रतीं चाम्बिकालीलां देवर्षिगणवन्दिताम्॥ १९.७८॥
रथावतीर्णस्तस्यां च कृतस्नानो यथाविधि।
चिक्षेपास्थीनि भूपस्य तस्य सूर्यप्रभस्य सः॥ १९.७९॥
दत्तदानः कृतश्राद्धो रथारूढस्ततोऽपि च।
प्रस्थितः क्रमशः प्राप प्रयागमृषिसंस्तुतम्॥ १९.८०॥
यत्रार्चिराद्यधूमादिमाग्राविव समागतौ।
गङ्गायमुनयोर्वाहौ भातः सुगतये नृणाम्॥ १९.८१॥
तत्रोपोष्य कृतस्नानदानश्राद्धादिसत्क्रियः।
वाराणसीं जगामाथ स चन्द्रप्रभभूपतिः॥ १९.८२॥
एत मोक्षं प्रयातेति वदन्तामिव दूरतः।
वाताक्षिप्तसमुत्क्षिप्तैः सुरसद्मध्वजांशुकैः॥ १९.८३॥
तस्यां दिनान्युपोष्य त्रीण्यभ्यर्च्याथ वृषध्वजम्।
भोगैर्निजोचितैस्तैस्तैः प्रययौ स गयां प्रति॥ १९.८४॥
ततः फलौघनमितैर्मञ्जुगुञ्जद्विहंगमैः।
पदे पदे सप्रणामं स्तूयमान इवाङ्घ्रिपैः॥ १९.८५॥
विक्षिप्तवन्यकुसुमैरर्च्यमान इवानिलैः।
नानारण्यान्यतिक्रम्य पुण्यं प्राप गयाशिरः॥ १९.८६॥
विधाय तत्र च श्राद्धं विधिवद्भूरिदक्षिणम्।
चन्द्रप्रभः स राजात्र धर्मारण्यमुपेयिवान्॥ १९.८७॥

गयाकूपेऽस्य ददतः पितुः पिण्डं तदन्तरात्।
समुत्तस्थुस्तमादातुं त्रयो मानुषपाणयः॥ १९.८८॥
तद्दृष्ट्वैव स विभ्रान्तः किमेतदिति पार्थिवः।
कस्मिन्हस्ते क्षिपे पिण्डमित्यपृच्छन्निजान्द्विजान्॥ १९.८९॥
ते तमूचुरयं तावदेकश्चौरस्य निश्चतम्।
हस्तो लोहमयः शङ्कुर्यस्मिन्देवैष दृश्यते॥ १९.९०॥
द्वितीयो ब्राह्मणस्यायं करो धृतपवित्रकः।
राज्ञः पाणिस्तृतीयोऽयं साङ्गुलीयः सुलक्षणः॥ १९.९१॥
तन्न विद्मः क्व पिण्डोऽयं निक्षेप्यः किमिदं भवेत्।
इत्युक्तस्तैर्द्विजैः सोऽत्र राजा लेभे न निश्चयम्॥ १९.९२॥
इत्याख्याय कथाश्चर्यं वेतालोऽंसस्थितस्तदा।
स त्रिविक्रमसेनं तं जगाद नृपतिं पुनः॥ १९.९३॥
तत्कस्य हस्ते देयः स्यात्स पिण्ड इति वक्तु मे।
भवांस्तावत्स एवात्र प्राक्तनः समयश्च ते॥ १९.९४॥
इति वेतालतः श्रुत्वा मुक्तमौनः स भूपतिः।
तं त्रिविक्रमसेनोऽत्र धर्मज्ञः प्रत्यभाषत॥ १९.९५॥
चौरस्य हस्ते दातव्यः स पिण्डः क्षेत्रजो यतः।
चन्द्रप्रबः स नृपतिः पुत्रस्तस्यैव नान्ययोः॥ १९.९६॥
विप्रस्य जनकस्यापि स हि पुत्रो न बुध्यते।
विक्रीतो हि धनेनात्मा तामेकां तेन यामिनीम्॥ १९.९७॥
राज्ञः सूरप्रबस्यापि संस्कारादानवर्धनैः।
भवेत्स पुत्रो न स्याच्चेत्स्वधनं तस्य तत्कृते॥ १९.९८॥
शिशोस्तस्य हि शीर्षान्ते मञ्चस्थस्यैव हेम यत्।
न्यस्तमासीत्तदेवास्य मूल्यं संवर्धनादिके॥ १९.९९॥
तस्माद्धस्तोदकप्राप्ता तन्माता यस्य येन सा।
अज्ञा तज्जनने दत्ता यस्य तन्निखिलं धनम्॥ १९.१००॥
तस्य स क्षेत्रजः पुत्रश्चौरस्यैव महीपतिः।
पिण्डस्तस्यैव हस्ते च देयस्तेनेति मे मतिः॥ १९.१०१॥
इत्युक्तवतो नृपतेस्तस्यांसात्स्वपदमेव वेतालः।
प्रययौ स च त्रिविक्रमसेनो राजा तमन्वयाद्भूयः॥ १९.१०२॥

# विंशो वेतालः

ततो गत्वा गृहीत्वांसे वेतालं शिंशपातरोः।
स त्रिविक्रमसेनस्तमुच्चचाल पुनर्नृपः॥ २०.१॥
मौनेन प्रस्थितं तं च वेतालोऽंसादुवाच सः।
राजन्कस्तेऽनुबन्धोऽयं गच्छ रात्रिसुखं भज॥ २०.२॥
न युक्तं तव नेतुं मां कुभिक्षोस्तस्य गोचरम्।
ग्रहो वा तत्र चेदस्तु कथामेकामिमां शृणु॥ २०.३॥
अस्ति स्वरेखानुत्क्रान्तवर्णभेदव्यवस्थिति।
नगरं चित्रकूटाख्यं बिभ्राणं सत्यनामताम्॥ २०.४॥
तत्रामृतरसासारवर्षी प्रणयिचक्षुषाम्।
चन्द्रावलोक इत्यासीद्राजा राजशिखामणिः॥ २०.५॥
आलानं शौर्यकरिणस्त्यागस्योत्पत्तिकेतनम्।
विलासवेश्म रूपस्य शशंसुर्यं विचक्षणाः॥ २०.६॥
सतीषु सर्वसंपत्सु यन्न प्राप निजोचिताम्।
भार्यां सैका परं चिन्ता यूनस्तस्याभवद्धृदि॥ २०.७॥
एकदा च तदुद्वेगविनोदाय महाटवीम्।
जगामाश्वीयसहितो मृगयायै स भूपतिः॥ २०.८॥
तत्र सूकरवृन्दानि भिन्दन्बाणैर्निरन्तरैः।
श्यामलाम्बररोचिष्णुस्तमांसीव रविः करैः॥ २०.९॥
शाययञ्शरशय्यासु सिंहान्समरदुर्मदान्।
मूर्धजैर्धवलैर्भीष्मानर्जुनाधिकविक्रमः॥ २०.१०॥
विपक्षीकृत्य शरभान्पातयन्पर्वतोपमान्।
दम्भोलिकर्कशप्रासपातैर्जम्भारिविक्रमः॥ २०.११॥
रसाद्विविक्षुः स नृपो वनाभ्यन्तरमेककः।
तीव्रपार्ष्णिप्रहारेण प्रेरयामास वाजिनम्॥ २०.१२॥

स वाजी तेन च कशाघातेनोत्तेजितो भृशम्।
पार्ष्णिघातेन विषमं समं चागणयन्क्षणात्॥ २०.१३॥
वनान्तरं ततोऽनैषीद्वाताधिकजवो नृपम्।
मोहितेन्द्रियवृत्तिं तं व्यतीत्य दशयोजनीम्॥ २०.१४॥
तत्र तस्मिन्स्थिते वाहे राजा दिङ्मोहमेत्य सः।
भ्रमञ्श्रान्तो ददर्शैकमारात्सुविपुलं सरः॥ २०.१५॥
मारुतेनाभिमुख्येन नमितोन्नमितैर्मुहुः।
इत एहीति हस्ताभैः संज्ञां कुर्वदिवाम्बुजैः॥ २०.१६॥
तत्र गत्वा च तुरगं विपर्याणोपवर्तितम्।
स्नातपीतं तरुच्छायाबद्धं दत्ततृणोत्करम्॥ २०.१७॥
कृत्वा स्वयं कृतस्नानः पीताम्बुर्गलितश्रमः।
रम्येषु तत्प्रदेशेषु ददौ दृष्टिमितस्ततः॥ २०.१८॥
एकत्र चाशोकतरोरधस्तान्मुनिकन्यकाम्।
आमुक्तपुष्पाभरणां वल्कलांशुकशोभिनीम्॥ २०.१९॥
मुग्धबद्धजटाजूटसविशेषमनोरमाम्।
सखीद्वितीयामाश्चर्यरूपां राजा ददर्श सः॥ २०.२०॥
अचिन्तयच्च पुष्पेषोः पतितः शरगोचरे।
केयं स्यात्सरसि स्नातुं सावित्री किं स्विदागता॥ २०.२१॥
किं हरस्याङ्कविभ्रष्टा गौरी भूयः श्रिता तपः।
अहन्यस्तंगतस्येन्दोः कान्तिः किं वा धृतव्रता॥ २०.२२॥
तदेतामुपसृत्येह शनैरुपलभे वरम्।
इत्यालोच्य ययौ तस्याः कन्यायाः सोऽन्तिकं नृपः॥ २०.२३॥
सापि दृष्ट्वा तमायान्तं तद्रूपाकुलितेक्षणा।
पूर्वप्रारब्धपुष्पस्रक्सन्नहस्ता व्यचिन्तयत्॥ २०.२४॥
कोऽयमीदृगरण्येऽस्मिन्सिद्धो विद्याधरो नु किम्।
बतास्य रूपं विश्वस्य कृतार्थीकरणं दृशोः॥ २०.२५॥
एवं वितर्क्य पश्यन्ती तिर्यक्तं त्रपया ततः।
उत्थाय सोरुस्तम्भापि गन्तुं प्रावर्ततैव सा॥ २०.२६॥
अथोपेत्य स राजा तामेवं नागरिकोऽब्रवीत्।
आस्तां प्रथमदृष्टस्य दर्शनैकफलार्थिनः॥ २०.२७॥

जनस्य दूरायातस्य सुन्दरि स्वागतादिकम्।
कोऽयं न्वाश्रमिणां धर्मो यदेतस्मात्पलाय्यते॥ २०.२८॥
इत्युक्ते भूभुजा तस्याः सखी तद्बुद्धिचक्षणा।
तत्रोपवेश्य नृपतेश्चकारातिथ्यसत्क्रियाम्॥ २०.२९॥
अथ सप्रणयं राजा तां स पप्रच्छ सोत्सुकः।
भद्रे कः पुण्यवान्वंशस्त्वत्सख्यालंकृतोऽनया॥ २०.३०॥
कानि श्रोत्रामृतस्यन्दीन्यस्या नामाक्षराणि च।
किं चैवमनया पुष्पसुकुमारमिदं वपुः॥ २०.३१॥
तापसोचितया वृत्त्या विजनेऽस्मिन्कदर्थ्यते।
इति राज्ञो वचः श्रुत्वा तत्सखी प्रत्युवाच सा॥ २०.३२॥
एषा महर्षेः कण्वस्य दुहिता वर्धिताश्रमे।
मेनकासंभवा कन्या नाम्ना चेन्दीवरप्रभा॥ २०.३३॥
इहास्मिन्सरसि स्नातुमागतानुज्ञया पितुः।
इतोऽत्र नातिदूरेऽस्ति तस्यैतत्पितुराश्रमः॥ २०.३४॥
इत्युक्तः स तया हृष्टो राजारुह्य तुरङ्गमम्।
याचितुं तां सुतां तस्य कण्वर्षेराश्रमं ययौ॥ २०.३५॥
विवेश च विनीतस्तं बहिः स्थापितवाहनः।
जटावल्कलिभिः पूर्णं पादपैरिव तापसैः॥ २०.३६॥
तन्मध्ये च तमद्राक्षीदृषिभिः परिवारितम्।
तेजसाह्लादनं कण्वमुनिं चन्द्रमिव ग्रहैः॥ २०.३७॥
उपेत्य पादयोस्तं च ववन्दे सोऽपि तं मुनिः।
कल्पितातिथ्यविश्रान्तं ज्ञानी क्षिप्रादभाषत॥ २०.३८॥
वत्स चन्द्रवलोकैतच्छृणु यद्वच्मि ते हितम्।
जानासि यादृक्संसारे प्राणिनां मृत्युतो भयम्॥ २०.३९॥
तन्निःकारणमेवैतान्वराकान्हंसि किं मृगान्।
शस्त्रं हि भीतरक्षार्थं धात्रा क्षत्रस्य निर्मितम्॥ २०.४०॥
तत्प्रजा रक्ष धर्मेण समुन्मूलय कण्टकान्।
हस्त्यश्वास्त्रादियोग्याभिश्चललक्ष्म्यादि साधय॥ २०.४१॥
भुङ्क्ष्व राज्यसुखं देहि धनं दिक्षु यशः किर।
कृतान्तक्रीडितं हिंस्रं मृगयाव्यसनं त्यज॥ २०.४२॥

हन्तुर्वध्यस्य चान्यस्य यत्र तुल्या प्रमादिता।
किं तेन बह्वनर्थेन पाण्डोर्वृत्तं न किं श्रुतम्॥ २०.४३॥
एतत्कण्वमुनेर्वाक्यं श्रुत्वा समभिनन्द्य च।
राजा चन्द्रावलोकस्तमर्थज्ञः प्रत्यभाषत॥ २०.४४॥
अनुशिष्टोऽस्मि भगवन्कृतो मेऽनुग्रहः परः।
मृगयाया निवृत्तोऽहं प्राणिनः सन्तु निर्भयाः॥ २०.४५॥
तच्छ्रुत्वोवाच स मुनिस्तुष्टोऽहममुना तव।
प्राणिष्वभयदानेन तद्वृणीष्वेप्सितं वरम्॥ २०.४६॥
इत्युक्तस्तेन मुनिना कालज्ञः स नृपोऽभ्यधात्।
तुष्टोऽसि चेत्सुतां देहि मह्यमिन्दीवरप्रभाम्॥ २०.४७॥
इत्यर्थितवते सोऽस्मै राज्ञे स्नानगतां मुनिः।
अप्सरःसंभवां कन्यां तां ददावनुरूपिकाम्॥ २०.४८॥
ततः कृतविवाहस्तां मुनिभार्याप्रसाधिताम्।
कृतानुयात्रामुद्बाष्पैस्तापसैरा निजाश्रमात्॥ २०.४९॥
इन्दीवरप्रभां भार्यामादायारुह्य वाजिनम्।
चन्द्रावलोकस्तरसा प्रतस्थे स ततो नृपः॥ २०.५०॥
गच्छतश्चास्य विततं दृष्ट्वा तद्दिनचेष्टितम्।
रविः खिन्न इवास्ताद्रिमस्तके समुपाविशत्॥ २०.५१॥
ददृशे मृगनेत्रा च क्रमादुद्रिक्तमन्मथा।
ध्वान्तनीलपटच्छन्नरूपा रात्र्यभिसारिका॥ २०.५२॥
तस्मिन्काले पथि प्राप स राजाश्वत्थपादपम्।
सज्जनाशयसुस्वच्छवापीजलतटस्थितम्॥ २०.५३॥
शाखापत्त्रौघसंछन्नशाद्वलश्यामलस्थलम्।
दृष्ट्वा च तं वसामीह रात्रिमित्यकरोद्धृदि॥ २०.५४॥
ततोऽवतीर्य तुरगाद्दत्त्वा तस्मै तृणोदकम्।
विश्रम्य पुलिने वाप्या उपयुक्ताम्बुमारुतः॥ २०.५५॥
मुनिपुत्रिकया सार्धं तया तस्य तरोस्तले।
प्रियया पुष्पशय्यायां संविवेश स भूपतिः॥ २०.५६॥
तत्क्षणं च समाक्रम्य तिमिरांशुकहारिणा।
सरागमाननं प्राच्याश्चुचुम्बे शशलक्ष्मणा॥ २०.५७॥

विरेजुश्चन्द्रकिरणैः समाश्लिष्य प्रसारिताः।
वीतमानावकाशाश्चाशेषा वितमसो दिशः॥२०.५८॥
अत्रान्तरे लतागुल्मविवरप्रसृतैः करैः।
ऐन्दवै रत्नदीपाभैस्तरुमूले विभासिते॥२०.५९॥
सोऽपि राजा सिषेवे तामाश्लिष्येन्दीवरप्रभाम्।
नवसंगमसोत्कण्ठसरसं सुरतोत्सवम्॥२०.६०॥
विस्रंसयामास शनैर्नीवीं तस्यास्त्रपामिव।
अखण्डयच्च दशनैर्मुग्धभावमिवाधरम्॥२०.६१॥
रचयामास कुचयोर्यौवनद्विपकुम्भयोः।
करजक्षतसद्रत्ननवनक्षत्रमालिकाम्॥२०.६२॥
मुखं कपोलौ नयने मुहुः परिचुचुम्ब च।
लावण्यामृतनिःष्यन्दमापिबन्निव सर्वतः॥२०.६३॥
इत्थन्निधुवनक्रीडासुखेन स तया सह।
निनाय कान्तया तत्र राजा क्षणमिव क्षपाम्॥२०.६४॥
प्रातश्च मुक्तशयनः सांध्यस्यानन्तरं विधेः।
स्वसैन्यावाप्तये यातुमुन्मुखोऽभूद्वधूसखः॥२०.६५॥
तावच्च नक्तं लुप्ताब्जखण्डशोभं निशापतिम्।
भियेवास्ताद्रिकुहरप्रलीनं ध्वस्ततेजसम्॥२०.६६॥
हन्तुकाम इव क्रोधादाताम्रतररोचिषि।
प्रसारितकरोत्क्षिप्तमण्डलाग्रे विवस्वति॥२०.६७॥
अकस्मादाजगामात्र विद्युत्पिङ्गशिरोरुहः।
कज्जलश्यामलः कालमेघाभो ब्रह्मराक्षसः॥२०.६८॥
अन्त्रमालाकृतोत्तंसः केशयज्ञोपवीतभृत्।
खादन्नरशिरोमांसं कपालेन पिबन्नसृक्॥२०.६९॥
सोऽट्टहासं विमुच्योग्रं मुखेनाग्निं वमन्क्रुधा।
दंष्ट्राकरालो राजानं भर्त्सयन्निजगाद तम्॥२०.७०॥
पाप ज्वालामुखं नाम विद्धि मां ब्रह्मराक्षसम्।
निवासश्चैष मेऽश्वत्थो देवैरपि न लङ्घ्यते॥२०.७१॥
सोऽयं त्वया समाक्रम्य परिभुक्तः स्त्रिया सह।
रात्रिचर्यागतस्याद्य तद्धङ्क्ष्वाविनयात्फलम्॥२०.७२॥

एषोऽहं ते दुराचार कामोपहतचेतसः।
उत्पाट्य हृदयं भोक्ष्ये पास्याम्येव च शोणितम्॥ २०.७३॥
तच्छ्रुत्वैव तथा घोरं तमवध्यमवेक्ष्य च।
त्रस्ताङ्गनः सविनयं भयात्प्रत्यब्रवीन्नृपः॥ २०.७४॥
अजानतापराद्धं यन्मया ते तत्क्षमस्व मे।
तवाहमाश्रमे ह्यस्मिन्नतिथिः शरणाश्रितः॥ २०.७५॥
दास्यामि चेप्सितं तुभ्यमानीय पुरुषं पशुम्।
येन ते भविता तृप्तिस्तत्प्रसीद क्रुधं त्यज॥ २०.७६॥
इति राज्ञो वचः श्रुत्वा शान्तः स ब्रह्मराक्ससः।
अस्तु को दोष इत्यन्तो विचिन्त्यैवमभाषत॥ २०.७७॥
यः सप्तवर्षदेश्योऽपि महासत्त्वो विवेकवान्।
त्वदर्थे स्वेच्छयात्मानं दद्याद्ब्राह्मणपुत्रकः॥ २०.७८॥
हन्यमानं च यं माता हस्तयोः पादयोः पिता।
अवष्टभ्यातिसुदृढं संनिवेश्य महीतले॥ २०.७९॥
तादृशं पुरुषं मह्यमुपहारीकरोषि चेत्।
स्वयं खङ्गप्रहारेण हत्वा सप्तदिनान्तरे॥ २०.८०॥
तत्ते क्षमिष्ये न्यक्कारमन्यथा तु महीपते।
सद्यो विनाशयिष्यामि त्वामहं सपरिच्छदम्॥ २०.८१॥
श्रुत्वैतत्स भयाद्राजा प्रतिपेदे तथेति तत्।
तिरोबभूव च ब्रह्मराक्षसः सोऽपि तत्क्षणम्॥ २०.८२॥
अथ चन्द्रावलोकोऽसौ राजा सेन्दीवरप्रभः।
हयारूढस्ततः प्रायात्सैन्यं चिन्वन्सुदुर्मनाः॥ २०.८३॥
अहो अहं मृगयया मदनेन च मोहितः।
गतः पाण्डुरिवाकाण्डे विनाशं बत बालिशः॥ २०.८४॥
प्राप्यते ह्युपहारोऽस्य राक्षसस्तादृशः कुतः।
तन्निजं नगरं तावद्यामि पश्यामि भावि किम्॥ २०.८५॥
इति ध्यायन्स च प्राप स्वसैन्यं चिन्वदागतम्।
तद्युक्तश्च सदारः स्वं चित्रकूटमगात्पुरम्॥ २०.८६॥
तत्र तस्योचितां भार्याप्राप्तिं वीक्ष्य कृतोत्सवे।
राष्ट्रेऽन्तर्गतदुःखस्य दिनशेषो जगाम सः॥ २०.८७॥

द्वितीयेऽह्नि रहः सर्वं स्ववृत्तान्तं शशंस सः।
मन्त्रिभ्यस्तेषु चैकस्तं मन्त्री सुमतिरब्रवीत्॥ २०.८८॥
विषादो देव ते मा भूदुपहारं हि तादृशम्।
आनेष्याम्यहमन्विष्य बह्वाश्चर्या हि मेदिनी॥ २०.८९॥
एवमाश्वास्य राजानं स सौवर्णीमकारयत्।
मन्त्री सप्ताब्ददेशीयबालकप्रतिमां द्रुतम्॥ २०.९०॥
रत्नैरलंकृतां तां च कृत्वा कर्णिरथार्पिताम्।
भ्रामयामास नगरग्रामघोषेष्वितस्ततः॥ २०.९१॥
यः सप्तवर्षदेशीयः स्वेच्छया विप्रपुत्रकः।
ददाति सर्वसत्त्वार्थमात्मानं ब्रह्मरक्षसे॥ २०.९२॥
उपहाराय सत्त्वस्थो मातापित्रोरनुज्ञया।
हन्यमानश्च यस्ताभ्यां हस्तपादे प्रगृह्यते॥ २०.९३॥
तस्मै ग्रामशतोपेतां हेमरत्नमयीमिमाम्।
ददाति प्रतिमां राजा पित्रोरुपचिकीर्षवे॥ २०.९४॥
इति च भ्राम्यमानायास्तस्याः प्रतिकृतेः शिशोः।
पटहोद्घोषणां मन्त्री सोऽग्रेऽजस्रमदापयत्॥ २०.९५॥
तावच्छ्रुत्वा तदेकस्मिन्नग्रहारे द्विजार्भकः।
कोऽपि सप्ताब्ददेशीयोऽप्यतिधीरोऽद्भुताकृतिः॥ २०.९६॥
पूर्वाभ्यासेन बाल्येऽपि सदा परहिते रतः।
प्रजापुण्यपरीपाक इव साकारतां गतः॥ २०.९७॥
उवाचोद्घोषकानेत्य युष्मदर्थे ददाम्यहम्।
आत्मानं पितरौ गत्वा बोधयित्वाभ्युपैमि च॥ २०.९८॥
इत्यूचिवांस्तान्मुदितान्स बालोऽनुमतश्च तैः।
गत्वा गृहं जगाद स्वौ पितरौ रचिताञ्जलिः॥ २०.९९॥
ददामि सर्वसत्त्वार्थं देहमेतं विनश्वरम्।
तन्मामभ्यनुजानीतं हतां चापदमात्मनः॥ २०.१००॥
आत्मप्रतिकृतिं ह्येतां गृहीत्वा वितरामि वाम्।
हेमरत्नमयीं राज्ञा दत्तां ग्रामशतान्विताम्॥ २०.१०१॥
एवं मे युष्मदानृण्यं परार्थश्चैव सिध्यति।
युवां च ध्वस्तदारिद्र्यौ बहून्पुत्रानवाप्स्यथः॥ २०.१०२॥

इत्युक्तवन्तं सहसा पितरौ तौ तमूचतुः।
किमेतद्भाषसे पुत्र वातेन क्षुभितोऽसि किम्॥ २०.१०३॥
किं वा ग्रहगृहीतोऽसि प्रलपस्यन्यथा कथम्।
को ह्यर्थैर्घातयेत्पुत्रं देहं दद्याच्च कः शिशुः॥ २०.१०४॥
एतत्पित्रोर्वचः श्रुत्वा बालः पुन उवाच सः।
न बुद्धिमोहाज्जल्पामि शृणुतं मेऽर्थवद्वचः॥ २०.१०५॥
अवाच्याशुचिसंपूर्णमुत्पत्त्यैव सुगुप्सितम्।
दुःखक्षेत्रं विनाश्येव शरीरमचिरादिदम्॥ २०.१०६॥
तदेतेनात्यसारेण सुकृतं यदुपार्ज्यते।
तदेव सारं संसारे कृतबुद्धिभिरुच्यते॥ २०.१०७॥
सर्वभूतोपकाराच्च किमन्यत्सुकृतं परम्।
तत्रापि पित्रोर्भक्तिश्चेत्किं देहाद्दृश्यते फलम्॥ २०.१०८॥
इत्यादिवाक्यैः स शिशुः शोचन्तौ दृढनिश्चयः।
तावङ्गीकारयामास पितरौ स्वमनीषितम्॥ २०.१०९॥
गत्वा च राजभृत्येभ्यः प्रतिमां तं हिरण्मयीम्।
आनीय प्रददौ ताभ्यां सग्रामशतशासनाम्॥ २०.११०॥
ततः कृत्वाग्रतो राजभृत्यांस्तानेव स द्रुतम्।
पितृभ्यामन्वितः प्रायाच्चित्रकूटं नृपान्तिकम्॥ २०.१११॥
तत्र चन्द्रावलोकस्तं वीक्ष्याखण्डिततेजसम्।
रक्षारत्नमिव प्राप्तं बालं राजा ननन्द सः॥ २०.११२॥
आरोप्य गजपृष्ठं च रचितस्रग्विलेपनम्।
नीनाय तं सपितृकं केतनं ब्रह्मरक्षसः॥ २०.११३॥
तत्र मण्डलमालिख्य तस्याश्वत्थस्य पार्श्वतः।
विहितोचितपूजेन हुते वह्नौ पुरोधसा॥ २०.११४॥
आविर्बभूव मुक्ताट्टहासः सोऽध्ययनं पठन्।
घूर्णन्रक्तासवक्षीबो जृम्भमाणो मुहुः श्वसन्॥ २०.११५॥
ज्वलन्नेत्रो दिशः कुर्वन्देहच्छायान्धकारिताः।
ज्वालामुखो महारौद्रदर्शनो ब्रह्मराक्षसः॥ २०.११६॥
ततश्चन्द्रावलोकस्तं दृष्ट्वा प्रह्वोऽब्रवीन्नृपः।
नरोपहारो भगवन्नानीतः स मया तव॥ २०.११७॥

सप्तमो दिवसश्चाद्य प्रतिज्ञातस्य सोऽस्य ते।
तत्प्रसीद गृहाणैतमुपहारं यथाविधि॥ २०.११८॥
इति राज्ञार्थितो विप्रकुमारं ब्रह्मराक्षसः।
स तमालोकयामास जिह्वया सृक्किणी लिहन्॥ २०.११९॥
तत्क्षणं स महासत्त्वो बालो हृष्यन्नचिन्तयत्।
स्वदेहदानेनानेन सुकृतं यन्मयार्जितम्॥ २०.१२०॥
तेन मा भून्मम स्वर्गो मोक्षो वा निरुपक्रियः।
भूयात्तु मे परार्थाय देहो जन्मनि जन्मनि॥ २०.१२१॥
इति संकल्पयत्येव तस्मिन्नापूर्यत क्षणात्।
विमानैः सुरसंघानां पुष्पवृष्टिमुचां नभः॥ २०.१२२॥
अथाग्रे प्रापितं तस्य बालं तं ब्रह्मरक्षसः।
माता जग्राह करयोः पिता चरणयोस्तथा॥ २०.१२३॥
ततो यावत्तमाकृष्टखड्गो राजा जिघांसति।
तावज्जहास स शिशुस्तथा सर्वेऽत्र ते यथा॥ २०.१२४॥
सब्रह्मराक्षसास्त्यक्त्वा स्वं स्वं कर्म सविस्मयाः।
रचिताञ्जलयः प्रह्वास्तन्मुखप्रेक्षिणोऽभवन्॥ २०.१२५॥
इति व्याख्याय वेतालो विचित्रसरसां कथाम्।
तं त्रिविक्रमसेनं स निजगाद नृपं पुनः॥ २०.१२६॥
तद्ब्रूहि राजन्को हेतुर्यत्तेन हसितं तदा।
बालेनैतादृशेऽप्यस्मिन्प्राणान्तसमयेऽप्यहो॥ २०.१२७॥
कौतुकं च महन्मेऽत्र तदेतच्चेन्न वक्ष्यसि।
जानानोऽपि ततो मूर्धा शतधा ते स्फुटिष्यति॥ २०.१२८॥
इति वेतालतः श्रुत्वा स राजा प्रत्युवाच तम्।
श्रृणु योऽभूदभिप्रायो हासे तस्य शिशोस्तदा॥ २०.१२९॥
यो नाम दुर्बलो जन्तुः स भये प्रत्युपस्थिते।
क्रन्दति प्राणहेतोः स्वं पितरं मातरं तथा॥ २०.१३०॥
तद्व्यपाये च राजानमार्तत्राणाय निर्मितम्।
तदलाभेऽपि यद्यत्र यथासंभवि दैवतम्॥ २०.१३१॥
तस्य त्वेकस्थमप्येतत्सर्वं संजातमन्यथा।
पितृभ्यां हस्तपादं हि रुद्धं तस्यार्थतृष्णया॥ २०.१३२॥

राजा च त्रातुमात्मानं स्वयं तं हन्तुमुद्यतः।
दैवतं तत्र यद्ब्रह्मरक्षस्तत्तस्य भक्षकम्॥२०.१३३॥
अध्रुवस्यान्तविरसस्याधिव्याधिक्षतस्य च।
देहस्यार्थे विमूढानां तेषामीदृग्विडम्बना॥२०.१३४॥
ब्रह्मेन्द्रविष्णुरुद्राद्या यत्रावश्यं विनाशिनः।
तत्रैषामीदृशी कापि शरीरस्थैर्यवासना॥२०.१३५॥
एतत्तन्मोहवैचित्र्यं दृष्ट्वा मत्वा च वाञ्छितम्।
सिद्धमाश्चर्यहर्षाभ्यां स जहास द्विजार्भकः॥२०.१३६॥
इत्युक्त्वा विरतस्य तस्य नृपतेरंसात्स भूयोऽपि त-
द्वेतालो झगिति स्वकं पदमगादन्तर्हितो मायया।
राजा सोऽप्यविकल्पमेव पुनरप्यन्वग्ययौ तं जवा-
दक्षोभ्यं हृदयं बतेह महतामम्भोनिधीनामिव॥२०.१३७॥

# एकविंशो वेतालः

अथ गत्वा पुनः प्राप्य शिंशपातस्ततोऽग्रहीत्।
स त्रिविक्रमसेनोऽंसे वेतालं तं नराधिपः॥ २१.१॥
आगच्छन्तं च तं भूयः स वेतालोऽब्रवीन्नृपम्।
राजन्नुद्दाढकन्दर्पां शृण्वेकां वच्मि ते कथाम्॥ २१.२॥
अस्ति शक्रपुरीवान्या धात्रा सुकृतिनां कृते।
दिवश्च्युतानां विहिता विशालाख्या पुरी भुवि॥ २१.३॥
तस्यां बभूव नृपतिः पद्मनाभ इति श्रुतः।
सच्चक्रनन्दकः स्त्रीमानाक्रान्तबलिराजकः॥ २१.४॥
तस्मिन्पृथ्वीपतौ तस्यां नगर्यां सुमहावणिक्।
अर्थदत्ताभिधानोऽभूद्धनैर्विजितवित्तपः॥ २१.५॥
तस्यैका च सुतानङ्गमञ्जरीत्युदपद्यत।
स्वःसुन्दरीप्रतिकृतिर्भुवि धात्रेव दर्शिता॥ २१.६॥
दत्ता च तेन वणिजा वणिग्वरसुताय सा।
मणिवर्माभिधानाय ताम्रलिप्तीनिवासिने॥ २१.७॥
एकापत्यतया चातिवत्सलः स न तां वणिक्।
भर्तृयुक्तां सुतां गेहात्तत्याजानङ्गमञ्जरीम्॥ २१.८॥
तस्याश्चानङ्गमञ्जर्याः पतिर्द्वेष्यो बभूव सः।
मणिवर्मा सरोगस्य कटुतिक्तमिवौषधम्॥ २१.९॥
पत्युस्तु सास्य सुमुखी जीवितादप्यभूत्प्रिया।
धनर्द्धिः कृपणस्येव कृच्छ्रात्सुचिरसंचिता॥ २१.१०॥
एकदा चान्तिकं पित्रोस्ताम्रलिप्तीं निजं गृहम्।
उत्कण्ठादिनिमित्तेन मणिवर्मा जगाम सः॥ २१.११॥
ततो दिनेषु यातेषु तीक्ष्णसूर्यांशुसायकैः।
प्रोषितानां निरुद्धाध्वा घर्मकाल इहाभ्यगात्॥ २१.१२॥

वसन्तविरहादुष्णा निःश्वासाः ककुभामिव।
मल्लिकापाटलामोदमेदुरा मरुतो ववुः॥२१.१३॥
उत्पेतुः पवनोद्धूता गगने रेणुराजयः।
दूत्यो घनागमायेव प्रहितास्तप्तया भुवा॥२१.१४॥
आकाङ्क्षिततरुच्छायाः कठोरातपतापिताः।
पथिका इव यान्ति स्म चिरेण दिवसा अपि॥२१.१५॥
चन्द्रांशुपाण्डुरुचयो गाढाश्लेषसुखप्रदम्।
विना हेमन्तमगमन्नतिदुर्बलतां निशाः॥२१.१६॥
तत्कालं चन्दनालेपधवला सा वणिक्सुता।
संवीततनुकौशेयशोभितानङ्गमञ्जरी॥२१.१७॥
ददर्श स्वगृहोत्तुङ्गवातायनगतैकदा।
आप्तसख्या युता भव्यं युवानं विप्रपुत्रकम्॥२१.१८॥
संचरन्तं रतिप्राप्त्यै नवोत्पन्नमिव स्मरम्।
कमलाकरनामानं पुत्रं राजपुरोधसः॥२१.१९॥
सोऽपीन्दोरिव मूर्तिं तां कान्तां दृष्ट्वोपरि स्थिताम्।
कुमुदाकरतां भेजे सानन्दः कमलाकरः॥२१.२०॥
तयोरभूदमूल्यं तन्मनःसंवननं तदा।
स्मरगुर्वाज्ञया यूनोरन्योन्यस्यावलोकनम्॥२१.२१॥
उन्मूलितह्रियौ तौ च दूरविक्षिप्तचेतसा।
रजोभिभूतौ जह्राते मन्मथावेगवात्यया॥२१.२२॥
दृष्ट्वा च मदनाविष्टः सख्या स कमलाकरः।
सहस्थितेन नीतोऽभूत्कथंचिद्भवनं निजम्॥२१.२३॥
सापि तं नामतोऽन्विष्य विवशानङ्गमञ्जरी।
तया स्वया समं सख्या प्राविशद्वासकं शनैः॥२१.२४॥
तत्र संचिन्तयन्ती च कान्तं कामज्वरातुरा।
नापश्यन्नाशृणोत्किंचिल्लुठन्ती शयनीयके॥२१.२५॥
गतेष्वहःसु द्वित्रेषु सत्रपा सभया च सा।
असह्यं विरहोन्मादं विसोढुं कृशपाण्डुरा॥२१.२६॥
दुष्प्रापप्रियसंयोगनिरास्था नक्तमेकदा।
गवाक्षप्रेरितकरेणाकृष्टेव हिमांशुना॥२१.२७॥

सुप्ते परिजने स्वैरं निर्गत्य मरणोन्मुखी।
जगाम स्वगृहोद्यानवापीं तरुलतावृताम्॥२१.२८॥
तत्र पित्रा कृतोदारप्रतिष्ठां कुलदेवताम्।
उपेत्य चण्डिकां देवीं नत्वा स्तुत्वा व्यजिज्ञपत्॥२१.२९॥
अस्मिञ्जन्मनि चेद्भर्ता न मया कमलाकरः।
प्राप्तस्तद्देवि भूयान्मे सोऽन्यस्मिन्नपि जन्मनि॥२१.३०॥
इत्युक्त्वा पुरतस्तस्या देव्याः साशोकपादपे।
पाशं विरचयामास स्वोत्तरीयेण रागिणी॥२१.३१॥
तावदाप्ता सखी तस्याः सा प्रबुध्यात्र वासके।
तामदृष्ट्वा तदुद्यानं दैवादागाद्विचिन्वती॥२१.३२॥
तत्र दृष्ट्वा च तां पाशमर्पयन्तीं तथा गले।
मा मेत्युक्त्वा प्रधाव्यैव पाशं तस्यास्तमच्छिनत्॥२१.३३॥
सापि तां वीक्ष्य संप्राप्तां कृत्तपाशां निजां सखीम्।
अनङ्गमञ्जरी भूमौ पपाताधिकदुःखिता॥२१.३४॥
आश्वासिता स्वसख्या च तया पृष्टा च सा क्षणात्।
दुःखहेतुं समाख्याय पुन एनामभाषत॥२१.३५॥
सखि मालतिके तन्मे दुर्लभे प्रियसंगमे।
गुर्वादिपरतन्त्राया न सुखं मरणात्परम्॥२१.३६॥
इति ब्रुवाणैवानङ्गशराग्निज्वलिता भृशम्।
सानङ्गमञ्जरी मोहं ययौ नैराश्यनिःसहा॥२१.३७॥
कष्टं स्मराज्ञा दुर्लङ्घ्या यया नीता दशामिमाम्।
अन्याविनीतवनिताहासिनीयं सखी मम॥२१.३८॥
इत्यादिविलपन्ती च तां सा मालतिका सखी।
शनैराश्वासयामास शीताम्बुपवनादिभिः॥२१.३९॥
तापोपशान्तये चास्याश्चकार नलिनीदलैः।
शय्यां ददौ च हृदये हारं तुहिनशीतलम्॥२१.४०॥
ततः साश्रुरुवाचैतां सखीं सानङ्गमञ्जरी।
सखि हारादिभिर्नायं दाहोऽन्तो मम शाम्यति॥२१.४१॥
येन प्रशाम्यति पुनः स्वबुद्ध्यैव विधत्स्व तत्।
मां संयोजय कान्तेन जीवितं मे यदीच्छसि॥२१.४२॥

एवमुक्तवतीं तां सा स्नेहान्मालतिकाब्रवीत्।
सखि भूयिष्टयाताद्य रात्रिः प्रातरहं पुनः॥२१.४३॥
इहैव कृतसंकेतमानेष्यामि प्रियं तव।
तदालम्ब्य धृतिं तावन्निजं प्रविश मन्दिरम्॥२१.४४॥
इत्युक्तवत्यै संतुष्य तस्यै सानङ्गमञ्जरी।
हारं स्वकण्ठादाकृष्य प्रददौ पारितोषिकम्॥२१.४५॥
गच्छाधुनैव स्वगृहं प्रातः सिध्यै ततो व्रज।
इति चैतां सखीं प्रेष्य सा विवेश स्ववासकम्॥२१.४६॥
प्रातश्च सा मालतिका केनाप्यनुपलक्षिता।
तत्सखी तस्य कमलाकरस्य भवनं ययौ॥२१.४७॥
चिन्वती तत्र चोद्याने तरुमूले ददर्श तम्।
चन्दनार्द्राम्बुरुहिणीपत्त्रशय्याविवर्तिनम्॥२१.४८॥
रहस्यधारिणैकेन कदलीदलमारुतैः।
आश्वास्यमानं सुहृदा दह्यमानं स्मराग्निना॥२१.४९॥
तस्या विनेयमस्य स्यात्कामावस्थेदृशीति सा।
विचिन्त्य तस्थौ प्रच्छन्ना ज्ञातुं तत्र विनिश्चयम्॥२१.५०॥
तावच्च सुहृदा तेन स ऊचे कमलाकरः।
क्षणमेकमिहोद्याने दत्त्वा दृष्टिं मनोरमे॥२१.५१॥
विनोदय मनो मित्र मात्र विक्लवतामगाः।
तच्छ्रुत्वा तं स्वसुहृदं विप्रपुत्रो जगाद सः॥२१.५२॥
यन्ममानङ्गमञ्जर्या वणिक्पुत्र्या तया हृतम्।
विनोदयामि तदिदं कुतः शून्याशयो मनः॥२१.५३॥
स्मरेण शून्यहृदयो बाणतूणीकृतो ह्यहम्।
तत्प्राप्स्यामि मनश्चौरीं तां यथा कुरु मे तथा॥२१.५४॥
इत्युक्ते विप्रपुत्रेण तेनात्मानं प्रदर्श्य सा।
हृष्टा मालतिकाभ्येत्य तमुवाचास्तसंशया॥२१.५५॥
तवास्म्यनङ्गमञ्जर्या सुभग प्रहितान्तिकम्।
संदेशं चाहमेवैषा विस्पष्टार्थं ब्रवीमि ते॥२१.५६॥
एष कः शिष्टधर्मो यत्प्रविश्य हृदयं हठात्।
मनो मुषित्वा मुग्धाया गम्यते स्थगितात्मना॥२१.५७॥

चित्रं च यद्वामदृशा तुभ्यमेव तयाधुना।
मनोहराय देहोऽपि दातुं प्राणैः सहेष्यते॥ २१.५८॥
निःश्वासान्सा हि संतप्तान्विमुञ्चति दिवानिशम्।
ज्वलतो हृदि कन्दर्पवह्नेर्धूमोद्गमानिव॥ २१.५९॥
संपतन्ति मुहुश्चास्याः साञ्जना बाष्पबिन्दवः।
वदनाम्भोजसौगन्ध्यलुब्धा मधुकरा इव॥ २१.६०॥
तद्यदीच्छसि तद्वच्मि शिवं वामुभयोरहम्।
इत्युक्तो मालतिकया सोऽब्रवीत्कमलाकरः॥ २१.६१॥
भद्रे भयं करोत्येषा वाक्तवाश्वासयत्यपि।
वदन्ती विधुरावस्थां बद्धभावां च मे प्रियाम्॥ २१.६२॥
तदेका गतिरत्र त्वं यथा वेत्सि तथा कुरु।
इत्युक्तवाक्ये कमलाकरे मालतिकाब्रवीत्॥ २१.६३॥
अनङ्गमञ्जरीमद्य गुप्तं तां प्रापयाम्यहम्।
नक्तं स्वभवनोद्यानं त्वं तिष्ठेस्तत्र बाह्यतः॥ २१.६४॥
ततः प्रवेशयिष्यामि त्वामत्रान्तः स्वयुक्तितः।
एवं यथेष्टो युवयोर्भविष्यति समागमः॥ २१.६५॥
इत्युक्त्वानन्द्य तं विप्रपुत्रं मालतिका ततः।
गत्वा कृतार्था सानङ्गमञ्जरीमप्यनन्दयत्॥ २१.६६॥
अथाह्ना सह यातेऽर्के क्वापि संध्यानुरागिणि।
ऐन्द्या दिशेन्दुतिलकेनानने सुप्रसाधिते॥ २१.६७॥
त्यक्तपद्माकरा प्राप्ता श्रीर्मयेतीव हर्षतः।
हसत्युफुल्लवदने विशदे कुमुदाकरे॥ २१.६८॥
कृतप्रसाधनः सोत्कः स्वैरं स कमलाकरः।
कामी कान्तागृहोद्यानद्वारबाह्यमुपागमत्॥ २१.६९॥
तावच्च सा मालतिका तां युक्त्यानङ्गमञ्जरीम्।
आनिनाय तदुद्यानं कृच्छ्राद्गमितवासराम्॥ २१.७०॥
उपवेश्य च तां मध्ये गुल्मके चूतशाखिनाम्।
प्रावेशयत्तं निर्गत्य तत्रैव कमलाकरम्॥ २१.७१॥
स च प्रविश्य पत्त्रौघघनपादपमध्यगाम्।
तामध्वग इव छायां ददर्शानङ्गमञ्जरीम्॥ २१.७२॥

उपैति यावच्च स तां तावद्दृष्ट्वा प्रधाव्य सा।
कामवेगहृतव्रीडा कण्ठे तं सहसाग्रहीत्॥ २१.७३ ॥
क्व यासि लब्धोऽसि ममेत्यालपन्ती च तत्क्षणम्।
सातिहर्षभरस्तब्धनिःश्वासा पञ्चतामगात्॥ २१.७४॥
पपात च महीपृष्ठे वातरुग्णा लतेव सा।
विचित्रो बत कामस्य विपाकविषमः क्रमः॥ २१.७५॥
तद्दृष्ट्वाशनिपातोग्रं सद्यः स कमलाकरः।
हा हा किमेतदित्युक्त्वा मूर्च्छितो न्यपतद्भुवि॥ २१.७६ ॥
लब्धसंज्ञः क्षणेनाथ तामङ्कारोपितां प्रियाम्।
आलिङ्गन्परिचुम्बंश्च तत्तच्च विलपन्बहु॥ २१.७७॥
तथा दुखातिभारेण स प्रसह्य निपीडितः।
यथा तस्य टसत्कृत्य क्षणाद्धृदयमस्फुटत्॥ २१.७८॥
अथ तौ मालतिकया शोच्यमानावुभावपि।
दृष्ट्वा प्राप्तक्षयौ शोकादिव क्षीणाभवत्क्षपा॥ २१.७९ ॥
प्रात उद्यानपालेभ्यो ज्ञात्वा बन्धुजनस्तयोः।
तत्राययौ त्रपाश्चर्यदुःखमोहाकुलीकृतः॥ २१.८० ॥
आसीत्कर्तव्यतामूढश्चिरं खेदादवाङ्मुखः।
कष्टाः कुलखलीकारहेतवो बत कुस्त्रियः॥ २१.८१ ॥
तावच्च ताम्रलिप्तीतः स तस्याः पतिरागमत्।
सोत्कण्ठोऽनङ्गमञ्जर्या मणिवर्मा पितुर्गृहात्॥ २१.८२॥
स श्वाशुरं गृहं प्राप्य यथातत्त्वमवेत्य तत्।
बाष्पान्धलोचनो ध्यायंस्तदेवोद्यानमाययौ॥ २१.८३ ॥
तत्र भार्यां गतासुं तां दृष्ट्वान्यसहितामपि।
शोकाग्निज्वलितो रागी सद्यः सोऽपि जहावसून्॥ २१.८४॥
ततः क्रन्दति तत्रस्थे जने कोलाहलाकुलाः।
आययुर्ज्ञातवृत्तान्ताः पौराः सर्वेऽत्र विस्मिताः॥ २१.८५॥
अथात्रानङ्गमञ्जर्याः पित्रा पूर्वावतारिता।
देवी संनिहिता चण्डी विज्ञप्ताभून्निजैर्गणैः॥ २१.८६ ॥
त्वदाकारप्रतिष्ठाकृदर्थदत्तः सदैष ते।
भक्तो वणिक्तदस्यास्मिन्दुःखे देवि दयां कुरु॥ २१.८७॥

एतद्गणेभ्यः श्रुत्वा सा शरण्या शङ्करप्रिया।
शान्तानङ्गास्त्रयोऽप्येते जीवन्त्विति समादिशत्॥२१.८८॥
अथ सर्वेऽपि ते सुप्तप्रतिबुद्धा इव क्षणात्।
तत्प्रसादात्समुत्तस्थुर्जीवन्तो वीतमन्मथाः॥२१.८९॥
ततो दृष्ट्वा तदाश्चर्यं सानन्दे सकले जने।
लज्जानतमुखः प्रायात्स्वगृहं कमलाकरः॥२१.९०॥
अर्थदत्तोऽपि तां ह्रीतामादायानङ्गमञ्जरीम्।
सुतां स्वभर्तृसहितां ययौ बद्धोत्सवो गृहान्॥२१.९१॥
इति कथयित्वा तस्यां रात्रौ मार्गे कथां स वेतालः।
निजगाद तं त्रिविक्रमसेनं क्षोणीपतिं भूयः॥२१.९२॥
राजन्कस्य वदैतेष्वधिको मोहोऽनुरागमूढेषु।
सोऽत्र च पूर्वोक्तस्ते शापो जानन्न चेद्वदसि॥२१.९३॥
इत्येतद्वेतालाच्छ्रुत्वा स प्रत्युवाच तं नृपतिः।
एतेषु रागमूढः प्रतिभाति ममाधिकः स मणिवर्मा॥२१.९४॥
इतरौ हि तावुभावपि कालक्रमपक्वमन्मथावस्थौ।
अन्योन्यसानुरागौ यदि जीवितमुज्झतः स्म तद्भवतु॥२१.९५॥
मणिवर्मा त्वतिमूढो यो भार्यामन्यपुरुषसक्तमृताम्।
दृष्ट्वैव कोपकाले प्रत्युत रक्तः शुचामुचत्प्राणान्॥२१.९६॥
इति गदितवतः स तस्य राज्ञो बत वेतालपतिः पुनर्जगाम।
निजमेव पदं तदंसपीठादथ राजापि तमन्वगात्स भूयः॥२१.९७॥

# द्वाविंशो वेतालः

ततो राजा पुनर्गत्वा वेतालं शिंशपाग्रतः।
स त्रिविक्रमसेनस्तं प्राप्यांसारोपितं व्यधात्॥ २२.१ ॥
आयान्तं तं च राजानं स वेतालोऽब्रवीत्पथि।
राजन्साधुः सुसत्त्वस्त्वं तदपूर्वां कथां शृणु॥ २२.२ ॥
बभूव पूर्वं कुसुमपुराख्यनगरेश्वरः।
पृथ्वीतलेऽस्मिन्धरणीवराहो नाम भूपतिः॥ २२.३ ॥
तस्य ब्राह्मणभूयिष्ठे राष्ट्रे ब्रह्मस्थलाभिधः।
अग्रहारोऽभवत्तत्र विष्णुस्वामीत्यभूद्द्विजः॥ २२.४ ॥
तस्यानुरूपा भार्याभूद्यथा स्वाहा हविर्भुजः।
तस्यां च तस्य चत्वारः क्रमादुत्पेदिरे सुताः॥ २२.५ ॥
अधीतवेदेषूत्क्रान्तशैशवेषु च तेषु सः।
विष्णुस्वामी दिवं प्रायाद्भार्ययानुगतस्तया॥ २२.६ ॥
ततस्ते तत्र तत्पुत्राः सर्वेऽप्यानाय्य दुःस्थिताः।
गोत्रजैर्हृतसर्वस्वा मन्त्रयांचक्रिरे मिथः॥ २२.७ ॥
नास्तीह गतिरस्माकं तद्व्रजामो वयं न किम्।
इतो मातामहगृहं ग्रामं यज्ञस्थलाभिधम्॥ २२.८ ॥
एतदेव विनिश्चित्य प्रस्थिता भैक्ष्यभोजनाः।
मातामहगृहं प्रापुस्तेऽथ तद्बहुभिर्दिनैः॥ २२.९ ॥
तत्र मातामहाभावान्मातुलैर्दत्तसंश्रयाः।
भुञ्जानास्तद्गृहे तस्थुः स्वाध्यायाभ्यासतत्पराः॥ २२.१० ॥
कालक्रमाच्च तेषां ते मातुलानामकिंचनाः।
अवज्ञापात्रतां जग्मुर्भोजनाच्छादनादिषु॥ २२.११ ॥
ततः स्वजनसंस्फूर्जदवमानहतात्मनाम्।
तेषां रहः सचिन्तानां ज्येष्ठो भ्राताब्रवीदिदम्॥ २२.१२ ॥

भो भ्रातरः किं क्रियते सर्वमाचेष्टते विधिः।
न शक्यं पुरुषस्येह क्वचित्किंचित्कदाचन॥ २२.१३ ॥
अहं ह्युद्वेगतो भ्राम्यन्प्राप्तोऽद्य पितृकानने।
विपन्नस्थितमद्राक्षं त्रस्ताङ्गं पुरुषं भुवि॥ २२.१४॥
अचिन्तयं च दृष्ट्वा तमहं तां स्पृहयन्गतिम्।
धन्योऽयमेवं विश्रान्तो दुःखभारं विमुच्य यः॥ २२.१५॥
इति संचिन्त्य तत्कालं कृत्वा मरणनिश्चयम्।
वृक्षाग्रसङ्गिना पाशेनात्मानमुदलम्बयम्॥ २२.१६ ॥
यावच्च मे विसंज्ञस्य तदा निर्यान्ति नासवः।
तावत्त्रुटितपाशोऽत्र पतितोऽस्मि महीतले॥ २२.१७॥
लब्धसंज्ञश्च केनापि पुंसा क्षिप्रात्कृपालुना।
आश्वास्यमानमात्मानमपश्यं पटमारुतैः॥ २२.१८॥
सखे कथय विद्वानप्येवं कं प्रति खिद्यसे।
सुखं हि सुकृताद्दुःखं दुःकृतादेति नान्यतः॥ २२.१९॥
दुःखाद्यदि तवोद्वेगः सुकृतं तत्समाचर।
कथं तु नारकं दुःखमात्मत्यागेन वाञ्छसि॥ २२.२०॥
इत्युक्त्वा मां समाश्वास्य स च क्वापि गतः पुमान्।
अहं चेहागतस्त्यक्त्वा तादृशं मरणोद्यमम्॥ २२.२१ ॥
तदेवं नेच्छति विधौ न मर्तुमपि लभ्यते।
इदानीं च तनुं तीर्थे तपसा दाहयाम्यहम्॥ २२.२२॥
येन निर्धनतादुःखभागी न स्यामहं पुनः।
इत्युक्तवन्तं ज्येष्ठं तं कनिष्ठा भ्रातरोऽब्रुवन्॥ २२.२३॥
अर्थैर्विना कथं प्राज्ञोऽप्यार्य दुःकेन बाध्यसे।
किं न वेत्सि यदर्थानां शरदभ्रचला गतिः॥ २२.२४॥
आहृत्य रक्ष्यमाणापि यत्नेनान्तविरागिणी।
असन्मैत्री च वेश्या च श्रीश्च कस्य कदा स्थिरा॥ २२.२५॥
तदुद्योगेन स गुणः कोऽप्युपार्ज्यो मनस्विना।
आनीयन्ते हटाद्बद्धा येनार्थहरिणा मुहुः॥ २२.२६॥
इत्युक्तो भ्रातृभिर्धैर्यं क्षणाज्ज्येष्ठोऽवलम्ब्य सः।
उवाच को गुणस्तादृगर्जनीयो भवेदिति॥ २२.२७॥

ततो विचित्य सर्वे ते वदन्ति स्म परस्परम्।
विचिन्त्य पृथ्वीं विज्ञानं किंचिच्छिक्षामहे वयम्॥ २२.२८॥
निश्चित्यैतच्च संकेतस्थानमुक्त्वा समागमे।
एकैकशस्ते चत्वारश्चतस्रः प्रययुर्दिशः॥ २२.२९॥
याति काले च मिलितास्ते संकेतनिकेतने।
किं केन शिक्षितमिति भ्रातरोऽन्योन्यमब्रुवन्॥ २२.३०॥
अथात्रैकोऽब्रवीदीदृग्विज्ञानं शिक्षितं मया।
येनास्थिशकलं प्राप्य प्राणिनो यस्य कस्यचित्॥ २२.३१॥
उत्पादयाम्यहं तस्मिन्मांसं तदुचितं क्षणात्।
एतत्तस्य वचः श्रुत्वा द्वितीयस्तेष्वभाषत॥ २२.३२॥
अहं तत्रैव संजातमांसेऽस्थिशकले किल।
जाने जनयितुं लोमत्वचं तत्प्राणिसंभवि॥ २२.३३॥
ततस्तृतीयोऽप्यवदज्जाने तत्रैव चास्म्यहम्।
तत्प्रान्यवयवान्स्रष्टुं जातत्वङ्मांसलोमनि॥ २२.३४॥
चतुर्थश्च ततोऽवादीदुत्पन्नावयवाकृतिम्।
तमेव प्राणिनं प्राणैर्युक्तं कर्तुमवैम्यहम्॥ २२.३५॥
एवमुक्त्वा मिथः स्वस्वविज्ञानप्रथनाय ते।
चत्वारोऽप्यस्थिखण्डाय प्रययुर्भ्रातरोऽटवीम्॥ २२.३६॥
तत्र सिंहस्य ते प्रापुरस्थिखण्डं विधेर्वशात्।
अविज्ञातविशेषाश्च गृह्णन्ति स्म तथैव तत्॥ २२.३७॥
एकश्च तत्समुचितैस्ततो मांसैरयोजयत्।
द्वितीयोऽजनयत्तस्य तद्वत्त्वग्लोमसंहतीः॥ २२.३८॥
तृतीयश्चाखिलैरङ्गैस्तद्योग्यैस्तदपूरयत्।
चतुर्थश्च ददौ तस्य सिंहीभूतस्य जीवितम्॥ २२.३९॥
उदतिष्ठदथोद्धूतसटाभारोऽतिभैरवः।
स दंष्ट्रासंकटमुखः सिंहः खरनखाङ्कुशः॥ २२.४०॥
धावित्वा च स्वनिर्मातॄंस्तानेव चतुरोऽपि सः।
अवधीत्केसरी तृप्तो विवेश च वनं ततः॥ २२.४१॥
एवं ते सिंहनिर्माणदोषान्नष्टा द्विजातयः।
दुष्टं हि जन्तुमुत्थाप्य कस्यात्मनि सुखं भवेत्॥ २२.४२॥

इत्थं चोपार्जितो यत्नाद्गुणोऽपि विधुरे विधौ।
संपत्तये न न परं जायते तु विपत्तये॥ २२.४३॥
मूले ह्यविकृते दैवे सिक्ते प्रज्ञानवारिणा।
नयालवालः फलति प्रायः पौरुषपादपः॥ २२.४४॥
इति तस्यां निशि मार्गे वेतालेनांसतः कथां तेन।
आख्याय स त्रिविक्रमसेनो राजा पुनर्जगदे॥ २२.४५॥
राजंस्तेष्वपराध्यति चतुर्षु कस्तत्र सिंहनिर्माणे।
यन्न्यवधीत्तत्क्लृप्तो वद समयः सोऽत्र पूर्वस्ते॥ २२.४६॥
इति वेतालाच्छ्रुत्वा राजा सोऽचिन्तयद्विमौनस्य।
इच्छति गन्तुमयं मे यात्वानेष्याम्यमुं भूयः॥ २२.४७॥
इति हृदि निश्चित्य स तं महीपतिः प्रत्युवाच वेतालम्।
यस्तस्य जीवदायी सिंहस्य स पापभाक्तेषु॥ २२.४८॥
प्राणिविशेषमबुद्ध्वा मांसत्वग्लोमगात्रनिर्माणम्।
युक्तिबलात्तु कृतं यैस्तेषां दोषोऽस्ति नाज्ञानात्॥ २२.४९॥
येन तु सिंहाकारं दृष्ट्वा विद्याप्रकाशनोत्केन।
प्राणास्तस्य वितीर्णास्तेन कृता ब्रह्महत्यास्ताः॥ २२.५०॥
एतत्स राज्ञो वचनं निशम्य स्वधाम वेतालवरो जगाम।
तस्यांसतस्तत्पुन एव मायी राजापि तं सोऽनुससार भूयः॥ २२.५१॥

# त्रयोविंशो वेतालः

ततो गत्वा पुनः प्राप शिंशपापादपात्ततः।
स त्रिविक्रमसेनस्तं वेतालं राजसत्तमः॥ २३.१॥
स्कन्धे कृत्वा च तं मौनी दर्शितानेकवैकृतम्।
यावत्प्रतिष्ठते तावत्स वेतालस्तमब्रवीत्॥ २३.२॥
राजन्नकार्येऽप्येतस्मिन्दुर्वारोऽयं ग्रहस्तव।
तत्ते श्रमविनोदाय कथयामि कथां शृणु॥ २३.३॥
आसीत्कलिङ्गविषये नाम्ना शोभावती पुरी।
दिवीव शक्रनगरी वसतिः शुभकर्मणाम्॥ २३.४॥
यां प्रद्युम्न इवैश्वर्यवीर्यातिशयविश्रुतः।
प्रद्युम्ननामा नृपतिः शशासोर्जितशासनः॥ २३.५॥
गुणापकर्षश्चापेषु मुरजेषु कराहतिः।
युगेष्वश्रूयत कलिर्यस्यां प्रज्ञासु तीक्ष्णता॥ २३.६॥
एकदेशे पुरस्तस्या नृपेण प्रतिपादितः।
यज्ञस्थलाभिधानोऽभूदग्रहारो बहुद्विजः॥ २३.७॥
तत्रासीद्यज्ञसोमाख्यो ब्राह्मणो वेदपारगः।
महाधनोऽग्निहोत्री च पूजितातिथिदेवतः॥ २३.८॥
तस्य व्यतीते तारुण्ये मनोरथशतैः सुतः।
भार्यायामनुरूपायामेक एवोदपद्यत॥ २३.९॥
ववृधे च पितुः सोऽस्य गृहे बालः सुलक्षणः।
कृताभिधानो विधिवद्देवसोम इति द्विजैः॥ २३.१०॥
प्राप्तषोडशवर्षश्च स विद्याविनयादिभिः।
आवर्जितजनोऽकस्माज्ज्वरेण प्राप पञ्चताम्॥ २३.११॥
ततः परासुं स्नेहात्तमाश्लिष्य सह भार्यया।
यज्ञसेनः पिता शोचन्न दाहाय जहौ चिरम्॥ २३.१२॥

ब्रह्मन्संसारगन्धर्वनगरस्य न वेत्सि किम्।
परावरज्ञोऽपि गतिं वारिबुद्बुदभङ्गुराम्॥ २३.१३॥
ये सैन्यैः पूरितधरा हर्म्यपृष्ठेषु हारिषु।
लसत्संगीतनादेषु रत्नपर्यङ्कवर्तिनः॥ २३.१४॥
श्रीखण्डद्रवलिप्ताङ्गा वरस्त्रीपरिवारिताः।
व्यलसन्नमरंमन्या भूलोकेऽस्मिन्नराधिपाः॥ २३.१५॥
तेऽप्येकका श्मशानेषु रुदत्प्रेतानुयायिषु।
चिताधिशयिनो यत्र जग्धाः क्रव्यात्कृशानुभिः॥ २३.१६॥
शिवाभिर्वलितोपान्ताः कालेन कवलीकृताः।
न रोद्धुं शकिताः कैश्चित्तत्रान्येषां कथैव का॥ २३.१७॥
तदेतं प्रेतमाश्लिष्य विद्वन्वद करोषि किम्।
इत्याद्यबोधयन्वृद्धा मिलितास्तं द्विजं ततः॥ २३.१८॥
ततस्तेन कथंचित्तं मुक्तमारोप्य तत्सुतम्।
शिबिकायां गतप्राणं कृतप्रेतप्रसाधनम्॥ २३.१९॥
बान्धवा वैशसोदश्रुमिलद्बन्धुजनान्विताः।
श्मशानं प्रापयामासुः कोलाहलसमाकुलाः॥ २३.२०॥
अत्रान्तरे च तत्रासीच्छ्मशाने कोऽपि तापसः।
वृद्धः पाशुपतो योगी मठिकायां कृतस्थितिः॥ २३.२१॥
वयसा तपसा चातिभूयसा सुकृशां तनुम्।
बिभ्राणो भङ्गभीत्येव सिराभिः परिवेष्टितम्॥ २३.२२॥
नाम्ना वामशिवो भस्मपाण्डुरोमावृताकृतिः।
विद्युत्पिङ्गजटाजूटो महेश्वर इवापरः॥ २३.२३॥
स तापसोऽत्र तत्कालं दत्तोपालम्भखेदितम्।
मूर्खं शठं ध्यानयोगाद्यवलिप्तमहंकृतम्॥ २३.२४॥
भिक्षाफलव्रतधरं शिष्यमन्तिकवासिनम्।
जगाद दूराच्छ्रुत्वा तं जनकोलाहलं बहिः॥ २३.२५॥
उत्तिष्ठ गत्वात्र बहिर्विज्ञायागच्छ सत्वरम्।
कुतोऽत्राश्रुतपूर्वोऽयं श्मशाने तुमुलारवः॥ २३.२६॥
इत्युक्ते गुरुणा तेन स शिष्यः प्रत्युवाच तम्।
नाहं यामि स्वयं याहि भिक्षावेला ह्यपैति मे॥ २३.२७॥

तच्छ्रुत्वोवाच स गुरुर्धिङ्मूर्खोदरतत्पर।
अह्नोऽर्धप्रहरे याते भिक्षावेलात्र का तव॥ २३.२८॥
श्रुत्वैवैतत्स तं क्रुद्धः कुशिष्यः प्राह तापसम्।
धिग्जराजीर्ण नाहं ते शिष्यो न त्वं गुरुर्मम॥ २३.२९॥
अहमन्यत्र यास्यामि वह पात्रीमिमां स्वयम्।
इत्युक्त्वोत्थाय स प्रायात्त्यक्त्वाग्रे दण्डकुण्डिकाम्॥ २३.३०॥
विहसन्नथ निर्गत्य मठिकायाः स तापसः।
तत्रागाद्यत्र दाहार्थमानीतः स द्विजार्भकः॥ २३.३१॥
दृष्ट्वा च तं जनतया शोच्यमानाग्र्ययौवनम्।
योगी प्रवेष्टुं तद्देहं मतिं चक्रे जरार्दितः॥ २३.३२॥
गत्वा च द्रुतमेकान्ते मुक्तकण्ठं प्ररुद्य च।
ननर्त स ततः क्षिप्रमङ्गहारैर्यथोचितैः॥ २३.३३॥
ततो विवेश योगात्तद्द्विजपुत्रकलेवरम्।
क्षणात्स स्वतनुं त्यक्त्वा तपस्वी यौवनेच्छया॥ २३.३४॥
तत्क्षणं रचितायां च चितायां सहसैव सः।
लब्धजीवो द्विजयुवा प्रोत्तस्थौ कृतजृम्भिकः॥ २३.३५॥
तद्दृष्ट्वा बन्धुवर्गस्य दिष्ट्या जीवति जीवति।
इत्युद्बभूव नादोऽत्र निखिलस्य जनस्य च॥ २३.३६॥
अथामोक्ष्यन्व्रतं सर्वान्मृषा योगेस्वरः स तान्।
विप्रपुत्रशरीरान्तःप्रविष्टस्तापसोऽब्रवीत्॥ २३.३७॥
लोकान्तरगतस्याद्य महापाशुपतव्रतम्।
ग्राह्यं साक्षान्ममाभाष्य दत्तं शर्वेण जीवितम्॥ २३.३८॥
अधुनैव च धार्यं तद्गत्वैकान्ते व्रतं मया।
जीवितं मेऽन्यथा नास्ति तद्यूयं यात याम्यहम्॥ २३.३९॥
इति सर्वान्स तत्रस्थान्संबोध्य दृढनिश्चयः।
स्वगृहान्प्रेषयामास हर्षशोकाकुलान्व्रती॥ २३.४०॥
स्वयं च गत्वा श्वभ्रे तत्क्षिप्त्वा पूर्वकलेवरम्।
आत्तव्रतो महायोगी युवीभूतोऽन्यतो ययौ॥ २३.४१॥
इति व्याख्याय वेतालः कथां निशि तदा पथि।
तं त्रिविक्रमसेनं स राजानं पुनरब्रवीत्॥ २३.४२॥

राजन्ब्रूहि स योगीन्द्रः कस्मात्परपुरे वसन्।
प्ररुरोद ननर्ताथ कौतुकं महदत्र मे॥ २३.४३॥
इति वेतालतः श्रुत्वा शापशङ्की स भूपतिः।
विमुच्य मौनमेवं तमवादीद्धीमतां वरः॥ २३.४४॥
शृणु तत्र बभूवास्य योऽभिप्रायस्तपस्विनः।
सह वृद्धं चिरायेदं शरीरं सिद्धिसाधनम्॥ २३.४५॥
पितृभ्यां लालितं बाल्ये त्यजाम्यद्येति दुःखितः।
स जरत्तापसोऽरोदीद्देहस्नेहो हि दुस्त्यजः॥ २३.४६॥
नवं देहं प्रवेक्ष्यामि साधयिष्याम्यतोऽधिकम्।
इति हर्षादनृत्यच्च कस्य नेष्टं हि यौवनम्॥ २३.४७॥
एतत्तस्य वचो निशम्य नृपतेरंसत्स भूयोऽप्यगा-
द्वेतालो मृतपूरुषान्तरगतस्तं शिंशपापादपम्।
राजा सोऽपि तमन्वधावदधिकोत्साहः पुनः प्रेप्सया
कल्पान्तेऽप्यचलं कुलाद्रिविजयि स्थैर्यं हि धीरात्मनाम्॥ २३.४८॥

# चतुर्विंशो वेतालः

ततस्तां तिमिरश्यामां चिताग्निज्वलितेक्षणाम्।
स्मशाने भीषणे तस्मिन्वीरो रजनिराक्षसीम्॥ २४.१॥
घोरामगणयन्राजा गत्वा तां शिंशपां पुनः।
स त्रिविक्रमसेनस्तं तस्या वेतालमाददे॥ २४.२॥
स्कन्धे कृत्वा च तं यावत्प्रक्रामति स पूर्ववत्।
तावद्भूयः स वेतालो नरदेवमुवाच तम्॥ २४.३॥
भो राजन्नहमुद्विग्नो न पुनस्त्वं गतागतैः।
तदेकं मे महाप्रश्नमिमं कथयतः शृणु॥ २४.४॥
आसीन्माण्डलिकः कोऽपि नृपतिर्दक्षिणापथे।
धर्माभिधानो धौरेयः साधूनां बहुगोत्रजः॥ २४.५॥
तस्य चन्द्रवतीनाम भार्या मालवदेशजा।
अभून्महाकुलोत्पन्ना वरस्त्रीमौलिमालिका॥ २४.६॥
तस्यां च तस्य भार्यायां भूपतेरुदपद्यत।
एकैव लावण्यवती नामान्वर्थाभिधा सुता॥ २४.७॥
प्रदेयायां च तस्यां स सुतायां धर्मभूपतिः।
उन्मूलितोऽभून्मिलितैर्दायादै राष्ट्रभेदिभिः॥ २४.८॥
ततः पलाय्य निरगात्स देशाद्भार्यया सह।
दुहित्रा च तया रात्रवात्तसद्रत्नसंचयः॥ २४.९॥
मालवं प्रति च स्वैरं प्रस्थितः श्वशुरास्पदम्।
विन्ध्याटवीं तया रात्र्या प्राप भार्यासुतायुतः॥ २४.१०॥
तस्यां प्रविष्टस्योदश्रुरिवावश्यायशीकरैः।
निशानुयात्रां दत्त्वेव ययौ तस्य महीक्षितः॥ २४.११॥
आरुरोहाथ पूर्वाद्रिमुत्क्षिप्ताग्रकरो रविः।
मा गाश्चौराटवीमेतामिति तं वारयन्निव॥ २४.१२॥

ततोऽत्र ससुताजानिः क्षताङ्घ्रिः कुशकण्टकैः।
पदातिः स नृपो गच्छन्भिल्लानां प्राप पल्लिकाम्॥ २४.१३॥
परेषां प्राणसर्वस्वहारिभिः पुंभिरावृताम्।
वर्जितां धार्मिकैर्दुर्गां कृतान्तनगरीमिव॥ २४.१४॥
तत्र दृष्ट्वैव तं दूरात्सवस्त्राभरणं नृपम्।
मोषितुं बहवोऽधावञ्शबरा विविधायुधाः॥ २४.१५॥
तान्विलोक्य सुताभार्ये राजा धर्मो जगाद सः।
पुरा स्पृशन्ति वां म्लेच्छास्तदितो विशतं वनम्॥ २४.१६॥
इति राज्ञोदिता रज्ञी वनमध्यं विवेश सा।
लावण्यवत्या सुतया सार्धं चन्द्रवती भयात्॥ २४.१७॥
राजाप्यभिमुखायातान्खङ्गचर्मधरोऽत्र सः।
अवधीत्तान्बहूञ्शूरः शबराञ्शरवर्तिणः॥ २४.१८॥
ततस्तेनाखिला पल्ली पत्याज्ञप्ता निपत्य तम्।
प्रहारक्षतचर्माणमवधीन्नृपमेककम्॥ २४.१९॥
गृहीताभरणे याते दस्युसैन्ये विलोक्य तम्।
भर्तारं निहतं दूराद्वनगुल्मान्तरस्थिता॥ २४.२०॥
राज्ञी चन्द्रवती सात्र दुहित्रा सह विह्वला।
पलायमाना गहनं दूरमन्वगगाद्वनम्॥ २४.२१॥
तत्र मध्याह्नतापार्तास्विव मूलानि शाखिनाम्।
छायास्वपि प्रविष्टासु शिशिराणि सहाध्वगैः॥ २४.२२॥
एकदेशेऽब्जसरसस्तीरेऽशोकतरोस्तले।
शोकार्ता रुदती श्रान्ता ससुता समुपाविशत्॥ २४.२३॥
तावत्तद्वनमभ्यर्णनिवासी मृगयाकृते।
महामनुष्यः कोऽप्यागादश्वारूढः सपुत्रकः॥ २४.२४॥
स चण्डसिंहनामा तं पुत्रं सिंहपराक्रमम्।
उवाच दृष्ट्वात्र तयोः पांसूत्थे पदपद्धती॥ २४.२५॥
एते सुरेखे सुभगे अनुसृत्याप्नुवो यदि।
स्त्रीयौ ते तत्तयोरेकां स्वीकुरुष्व यथारुचि॥ २४.२६॥
इत्युक्तवन्तं तं स्माह पुत्रः सिंहपराक्रमः।
यस्याः सूक्ष्माविमौ पादौ सा भार्या प्रतिभाति मे॥ २४.२७॥

सा हि स्वल्पवया नूनं जाने समुचिता मम।
बृहत्पादा तु योग्येयमेतज्ज्येष्ठवयास्तव॥२४.२८॥
इति सूनोर्वचः श्रुत्वा चण्डसिंहो जगाद तम्।
कैषा कथा भवन्माता प्रत्यग्रं हि गता दिवम्॥२४.२९॥
तादृशे सुकलत्रे च गते कान्यत्र वासना।
तच्छ्रुत्वा सोऽपि पुत्रस्तं चण्डसिंहमभाषत॥२४.३०॥
तात मैवमभार्यं हि शून्यं गृहपतेर्गृहम्।
अन्यच्च मूलदेवोक्ता गाथा किं न श्रुता त्वया॥२४.३१॥
यत्र घनस्तनजघना नास्ते मार्गावलोकिनी कान्ता।
अजडः कस्तदनिगडं प्रविशति गृहसंज्ञकं दुर्गम्॥२४.३२॥
तज्जीवितेन मे तात शापितोऽसि न तां यदि।
द्वितीयां मदभीष्टायां भार्यार्थे स्वीकरीष्यसि॥२४.३३॥
एतत्पुत्रवचः श्रुत्वा प्रतिपद्य च तत्सखः।
स चण्डसिंहोऽनुसरन्पदपङ्क्तिं शनैर्ययौ॥२४.३४॥
प्राप्य तच्च सरःस्थानं मुक्तातारौघमण्डिताम्।
श्यामां चन्द्रवतीं राज्ञीं तां ददर्शावभासिताम्॥२४.३५॥
लावण्यवत्या सुतया ज्योत्स्नयेवावदातया।
नैशीं द्यामिव मध्याह्ने तरुच्छायामुपाश्रिताम्॥२४.३६॥
उपाययौ च पुत्रेण साकं तां स सकौतुकः।
सापि दृष्ट्वा तमुत्तस्थौ वित्रस्ता चौरशङ्किनी॥२४.३७॥
अलं त्रासेन नाम्बैतौ चौरौ सौम्याकृती इमौ।
सुवेषौ कौचिदाखेटकृते नूनमिहागतौ॥२४.३८॥
इत्युक्ता सुतया राज्ञी यावद्दोलायतेऽत्र सा।
तावदश्वावतीर्णस्ते चण्डसिंहोऽब्रवीदुभे॥२४.३९॥
किं संभ्रमेण वामावां प्रणयाद्द्रष्टुमागतौ।
तद्विस्वस्य निरातङ्कं वदतं के युवामिति॥२४.४०॥
हरनेत्रानलज्वालादग्धमन्मथदुःस्थिते।
रतिप्रीती इवारण्यमिदमेवमुपागते॥२४.४१॥
प्रविष्टे स्थः कथं चेह बत निर्मानुषे वने।
रत्नप्रासादवासार्हमिदं हि युवयोर्वपुः॥२४.४२॥

कथं वराङ्गनोत्सङ्गयोग्यौ कण्टकिनीमिमाम्।
भुवं वां चरणौ भ्रान्ताविति नौ मनसि व्यथा॥ २४.४३॥
एषा च चित्रं युवयोः पतन्ती धूलिरानने।
वातोद्धूता हतच्छायमावयोः कुरुते मुखम्॥ २४.४४॥
भवत्योरेष चाङ्गेऽस्मिन्निपतन्पुष्पपेशले।
किरणोष्मा दहत्यस्मानुच्चण्डश्चण्डदीधितेः॥ २४.४५॥
तद्ब्रूतमात्मवृत्तान्तं दूयते हृदयं हि नः।
द्रष्टुं न शक्नुमोऽरण्ये स्थितिं वां स्वापदावृते॥ २४.४६॥
इत्युक्ते चण्डसिंहेन राज्ञी निःस्वस्य सा शनैः।
लज्जाशोकाकुला तस्मै स्वं वृत्तान्तमवर्णयत्॥ २४.४७॥
ततो निःस्वामिकां मत्वा तामाश्वास्य च सात्मजाम्।
स्वीचक्रे मधुरैर्वाक्यैश्चण्डसिंहोऽनुरञ्जयन्॥ २४.४८॥
आरोप्य चास्वयोः पृष्ठं सपुत्रस्तां सपुत्रिकाम्।
निनाय वित्तपपुरीसमृद्धां वसतिं निजाम्॥ २४.४९॥
सापि जन्मान्तरगतेवावशाङ्गीचकार तम्।
अनाथा कृच्छ्रपतिता विदेशे स्त्री करोति किम्॥ २४.५०॥
ततस्तां सूक्ष्मपादत्वाद्राज्ञीं सिंहपराक्रमः।
चण्डसिंहसुतस्तत्र भार्यां चन्द्रवतीं व्यधात्॥ २४.५१॥
तत्सुतां तां च लावण्यवतीं नृपतिकन्यकाम्।
बृहत्त्वात्पादयोर्भार्यां चण्डसिंहश्चकार सः॥ २४.५२॥
प्राग्घि सूक्ष्मबृहत्पादमुद्रापङ्क्तिद्वयेक्षणात्।
प्रतिपन्नं तथा ताभ्यां सत्यं कश्चातिवर्तते॥ २४.५३॥
एवं पादविपर्यासात्ते पितापुत्रयोस्तयोः।
दुहितामातरौ भार्ये जाते श्वश्रूस्नुषे तदा॥ २४.५४॥
कालेन च तयोस्ताभ्यां भर्तृभ्यां जज्ञिरे द्वयोः।
पुत्रा दुहितरश्चैव तेषामन्येऽप्यथ क्रमात्॥ २४.५५॥
इत्थं संप्राप्य तौ चण्डसिंहसिंहपराक्रमौ।
तस्थतुस्तत्र लावण्यवतीं चन्द्रवतीं च ते॥ २४.५६॥
इति व्यावर्ण्य वेतालस्तदा पथि कथां निशि।
स त्रिविक्रमसेनं तं पप्रच्छ नृपतिं पुनः॥ २४.५७॥

तयोर्मातादुहित्रोर्ये पुत्रपित्रोस्तयोर्नृप।
सकाशाज्जन्तवो जाताः क्रमादुभयपक्षयोः॥२४.५८॥
ज्ञात्वेदं ब्रूहि मे तेषामन्योन्यं के भवन्ति ते।
पूर्वोक्तः सोऽत्र शापस्ते जानानश्चेन्न वक्ष्यसि॥२४.५९॥
एतद्वेतालतः श्रुत्वा विमृशन्बहुधापि सः।
नाज्ञासीत्तद्यदा राजा तूष्णीकः प्रययौ तदा॥२४.६०॥
ततस्तदंसकूटस्थो वेतालो विहसन्हृदि।
मृतपूरुषदेहान्तो निविष्टः समचिन्तयत्॥२४.६१॥
नायं राजा महाप्रश्ने वेत्त्यस्मिन्दातुमुत्तरम्।
तेन तूष्णीं व्रजत्येष हृष्टोऽतिचतुरैः पदैः॥२४.६२॥
न च वञ्चयितुं शक्यः सत्त्वराशिरयं परम्।
क्रीडन्भिक्षुः स चास्माभिरियतैव न शाम्यति॥२४.६३॥
तदद्य वञ्चयित्वा तं दुरात्मानमुपायतः।
तत्सिद्धिं भाविकल्याणे राजन्यस्मिन्निवेशये॥२४.६४॥
इत्यालोच्य स वेतालो नृपं तमवदत्तदा।
राजन्कृष्णनिशाघोरे स्मशानेऽस्मिन्गतागतैः॥२४.६५॥
एतैः क्लिष्टः सुखार्हस्त्वं न विकल्पश्च कोऽपि ते।
तदाश्चर्येण धैर्येण तुष्टोऽहममुना तव॥२४.६६॥
शवमेतं नयेदानीं निर्गच्छाम्यमुतो ह्यहम्।
इदं तु शृणु यद्वच्मि हितं तव कुरुष्व च॥२४.६७॥
आनीतमेतद्भवता यस्यार्थे नृकलेवरम्।
कुभिक्षुः सोऽद्य मामस्मिन्समाहूयार्चयिष्यति॥२४.६८॥
उपहारीचिकीर्षुश्च त्वामेव स शठस्ततः।
भूमौ प्रणाममष्टाभिरङ्गैः कुर्विति वक्ष्यति॥२४.६९॥
त्वं प्राग्दर्शय तावन्मे करिष्येऽहं तथैव तत्।
इति सोऽपि महाराज वक्तव्यः श्रमणस्त्वया॥२४.७०॥
ततो निपत्य भूतौ स प्रणामं यावदेव ते।
दर्शयिष्यति तावत्त्वं छिन्द्यास्तस्यासिना शिरः॥२४.७१॥
ततो विद्याधरैश्वर्यसिद्धिर्या तस्य वाञ्छिता।
तां त्वं प्राप्स्यसि भुङ्क्ष्वेमं भुवं तदुपहारतः॥२४.७२॥

अन्यथा तु स भिक्षुस्त्वामुपहारीकरिष्यति।
एतदर्थं कृतो विघ्नस्तवात्रेयच्चिरं मया॥ २४.७३॥
तत्सिद्धिरस्तु ते गच्छेत्युक्त्वा तस्यांसपृष्ठगात्।
निर्गत्य स ययौ तस्माद्वेतालः प्रेतकायतः॥ २४.७४॥
अथ स नरपतिस्तं प्रीतवेतालवाक्याच्छ्रमणमहितमेव क्षान्तिशीलं विचिन्त्य।
वटविटपितलं तत्तस्य पार्श्वं प्रतस्थे मृतपुरुषशरीरं तद्गृहीत्वा प्रहृष्टः॥ २४.७५॥

# पञ्चविंशो वेतालः

ततस्तस्यान्तिकं भिक्षोः क्षान्तिशीलस्य भूपतिः।
स त्रिविक्रमसेनोऽत्र प्राप स्कन्धे शवं वहन्॥ २५.१॥
ददर्श तं च श्रमणं मार्गाभिमुखमेककम्।
कृष्णपक्षक्षपारौद्रे श्मशाने तरुमूलगम्॥ २५.२॥
असृग्लिप्तस्थले गौरेणास्थिचूर्णेन निर्मिते।
मण्डले दिक्षु विन्यस्तपूर्णशोणितकुम्भके॥ २५.३॥
महातैलप्रदीपाढ्ये हुतपार्श्वस्थवह्निनि।
संभृतोचितसंभारे स्वेष्टदैवतपूजने॥ २५.४॥
उपागाच्च स तं राजा सोऽपि भिक्षुर्विलोक्य तम्।
आनीतमटकं हर्षादुत्थायोवाच संस्तुवन्॥ २५.५॥
दुःकरो मे महाराज विहितोऽनुग्रहस्त्वया।
त्वा दृशाः क्व क्व चेष्टेयं देशकालौ क्व चेदृशौ॥ २५.६॥
निःकम्पं सत्यमेवाहुर्मुख्यं त्वां कुलभूभृताम्।
एवमात्मानपेक्षेण परार्थो येन साध्यते॥ २५.७॥
एतदेव महत्त्वं च महतामुच्यते बुधैः।
प्रतिपन्नादचलनं प्राणानामत्ययेऽपि यत्॥ २५.८॥
इति ब्रुवन्स सिद्धार्थमानी भिक्षुर्महीपतेः।
तस्यावतारयामास स्कन्धात्तं मटकं तदा॥ २५.९॥
स्नपयित्वा समालभ्य बद्धमाल्यं विधाय च।
मटकं मण्डलस्यान्तः स्थापयामास तस्य तत्॥ २५.१०॥
भस्मोद्धूलितगात्रश्च केशयज्ञोपवीतभृत्।
प्रावृतप्रेतवसनो भूत्वा ध्यानस्थितः क्षणम्॥ २५.११॥
तस्मिन्मन्त्रबलाहूतं प्रवेश्य नृकलेवरे।
तं वेतालवरं भिक्षुः पूजयामास स क्रमात्॥ २५.१२॥

ददौ तस्मै कपालार्घपात्रेणार्घ्यं सुनिर्मलैः।
नरदन्तैस्ततः पुष्पं सुगान्धि च विलेपनम्॥ २५.१३॥
दत्त्वा मानुषनेत्रैश्च धूपं मांसैर्बलिं तथा।
समाप्य पूजां राजानं तमुवाच स पार्श्वगम्॥ २५.१४॥
राजन्निहास्य मन्त्राधिराजस्य कृतसंविधेः।
प्रणाममङ्गैरष्टाभिर्निपत्य कुरु भूतले॥ २५.१५॥
येनाभिप्रेतसिद्धिं ते दास्यत्येष वरप्रदः।
श्रुत्वैतत्स्मृतवेतालवचा राजाब्रवीत्स तम्॥ २५.१६॥
नाहं जानामि तत्पूर्वं प्रदर्शयतु मे भवान्।
ततस्तथैव तदहं करिष्ये भगवन्निति॥ २५.१७॥
ततो दर्शयितुं यावत्स भिक्षुः पतितो भुवि।
तावत्खड्गप्रहारेण स राजास्य शिरोऽच्छिनत्॥ २५.१८॥
आचकर्ष च हृत्पद्ममुदरादस्य पाटितम्।
वेतालाय च तस्मै तच्छिरोहृत्कमलं ददौ॥ २५.१९॥
साधुवादे ततो दत्ते प्रीतैर्भूतगणैस्ततः।
तुष्टोऽब्रवीत्स वेतालो नृपं तं नृकलेवरात्॥ २५.२०॥
राजन्विद्याधरेन्द्रत्वं भिक्षोरासीद्यदीप्सितम्।
तत्तावद्भूमिसाम्राज्यभोगान्ते ते भविष्यति॥ २५.२१॥
क्लेशितोऽसि मया यत्त्वं तदभीष्टं वरं वृणु।
इत्युक्तवन्तं वेतालं स राजा तमभाषत॥ २५.२२॥
त्वं चेत्प्रसन्नः को नाम न सिद्धोऽभिमतो वरः।
तथाप्यमोघवचनादिदं त्वत्तोऽहमर्थये॥ २५.२३॥
आद्याः प्रश्नकथा एता नानाख्यानमनोरमाः।
चतुर्विंशतिरेषा च पञ्चविंशी समाप्तिगा॥ २५.२४॥
सर्वाः ख्याता भवन्त्वेताः पूजनीयाश्च भूतले।
इति तेनार्थितो राज्ञा वेतालो निजगाद सः॥ २५.२५॥
एवमस्तु विशेषं च शृणु वच्म्यत्र भूतले।
याश्चतुर्विंशतिः पूर्वा यैषा चैका समापिनी॥ २५.२६॥
कथावलीयं वेतालपञ्चविंशतिकाख्यया।
ख्याता जगति पूज्या च शिवा चैव भविष्यति॥ २५.२७॥

यः श्लोकमात्रमप्यस्याः कथयिष्यति सादरः।
यो वा श्रोष्यति तौ सद्यो मुक्तपापौ भविष्यतः॥ २५.२८॥
यक्षवेतालकूष्माण्डडाकिनीराक्षसादयः।
न तत्र प्रभविष्यन्ति यत्रैषा कीर्तयिष्यते॥ २५.२९॥
इत्युक्त्वा स ययौ तस्मान्निर्गत्य नृकलेवरात्।
यथाभिरुचितं धाम वेतालो योगमायया॥ २५.३०॥
ततस्तत्र सुरैः सार्धं राज्ञस्तस्य महेश्वरः।
साक्षादाविरभूत्तुष्टः प्रणतं चादिदेश तम्॥ २५.३१॥
साधु वत्स हतोऽद्यायं यत्त्वया कूटतापसः।
विद्याधरमहाचक्रवर्तिताहठकामुकः॥ २५.३२॥
त्वमादौ विक्रमादित्यः सृष्टोऽभूः स्वांशतो मया।
म्लेच्छरूपावतीर्णानामसुराणां प्रशान्तये॥ २५.३३॥
अद्य चोद्दामदुर्वृत्तदमनाय मया पुनः।
त्वं त्रिविक्रमसेनाख्यो हीरः सृष्टोऽत्र भूपतिः॥ २५.३४॥
अतः सद्वीपपातालां स्थापयित्वा महीं वशे।
विद्याधराणमचिरादधिराजो भविष्यसि॥ २५.३५॥
भुक्त्वा दिव्यांश्चिरं भोगानुद्विग्नः स्वेच्छयैव तान्।
त्यक्त्वा ममैव सायुज्यमन्ते यास्यस्यसंशयम्॥ २५.३६॥
अपराजितनामानं खड्गं चैतं गृहाण मे।
यस्य प्रसादात्सर्वं त्वं प्राप्स्यस्येतद्यथोदितम्॥ २५.३७॥
इत्युक्त्वा खड्गरत्नं तद्दत्त्वा तस्मै महीभृते।
वाक्पुष्पाभ्यर्चितस्तेन देवः शंभुस्तिरोदधे॥ २५.३८॥
अथ दृष्ट्वैव समाप्तं कार्यमशेषं निशि प्रभातायाम्।
प्रविवेश स त्रिविक्रमसेनः स्वपुरं नृपः प्रतिष्ठानम्॥ २५.३९॥
तत्र क्रमावगतरात्रिविचेष्टिताभिरभ्यर्चितः प्रकृतिभिर्विततोत्सवाभिः।
स्नानप्रदानगिरिशार्चननृत्तगीतवाद्यादिभिस्तदखिलं स दिनं निनाय॥ २५.४०॥

अल्पैरेव च वासरैः स नृपतिः शार्वस्य वीर्यादसेः
सद्वीपां सरसा तलां च बुभुजे निःकण्टकां मेदिनीम्।
संप्राप्याथ हराज्ञया सुमहतीं विद्याधराधीशतां
भुक्त्वा तां सुचिरं जगाम भगवत्सायुज्यमन्ते कृती॥ २५.४१ ॥

इति वेतालपञ्चविंशतिका

One of its oldest recensions is found in the 12th Book of the Kathāsaritsāgara ("Ocean of the Streams of Story"), a work in Sanskrit compiled in the 11th century by Somadeva, but based on yet older materials, now lost. This recension comprises in fact twenty-four tales, the frame narrative itself being the twenty-fifth. The two other major recensions in Sanskrit are those by Śivadāsa and Jambhaladatta.

The Vetala stories are popular in India and have been translated into many Indian vernaculars. Several English translations exist, based on Sanskrit recensions and on Hindi, Tamil, Bengali and Marathi versions.